## आदर्शपुस्तकोल्लेखपत्रिका ।

अस्य सर्वदर्शनसंग्रहस्य पुस्तकानि यैः परहितैकपरतया संस्करणसाहाय्यार्थं प्रदत्तानि तेषां नामादीनि पुस्तकानां संज्ञाश्च कृतज्ञतया प्रकाश्यन्ते—

क. च. इति संज्ञिते—पुस्तके काशीस्थ वे. शा. सं. रा. सदाशिव गोविन्द कान्हेरे इत्येतेषाम् ।

ख. इति संज्ञितम्—काशीस्थ वे. शा. सं. रा. दामोदरशास्त्री सहस्रबुद्धे इत्येतेषाम् ।

ग. इति संज्ञितम्—पुण्यपत्तनस्थडेक्कनकालेजाधिकारिभिर्दत्तम् ।

घ. इति संज्ञितम्—द्राविडलिप्या लिखितं म्हैसूरपुस्तकसंग्रहालयस्थम् । तत्संग्रहालयस्य व्यवस्थापकैः पण्डितवर्यैः ए. महादेवशास्त्रिभिः प्रहितम् । अस्मिन्पुस्तके शांकरदर्शनमपि विद्यते ।

ङ. इति संज्ञितम्—कालिकातामुद्रणालये मुद्रितम् ।

क. इति संज्ञितम्—काशीस्थपण्डितवर्यगोविन्ददास इत्येतेषां केवलं शांकरदर्शनम् ।

छ शांकरदर्शनस्य पुस्तकद्वयमेव लब्धम् । तस्य संशोधने फर्ग्युसनकालेजस्थसंस्कृताध्यापकैः पण्डितवर्यैरभ्यंकरोपाह्ववासुदेवशास्त्रिभिः साहाय्यं दत्त्वोपकारभारेणार्णितत्वं नीतोऽस्य पुस्तकस्य प्रकाशकः ।

## अथ सर्वदर्शनसंग्रहान्तर्गतदर्शनानामनुक्रमः ।





# द्वितीयावृत्तिसंबन्धि निवेदनम् ।

सोऽयं सर्वदर्शनसंग्रहाभिधो ग्रन्थः पुरा वसुद्व्यष्टेन्दु ( १८२८ ) परिमिते शाकीये संवत्सरेऽत्र संस्थायां मुद्रितोऽभूत् । स च न केवलमत्र नापि केवलं महाराष्ट्रे किंतु मोहमयीमहामहीमण्डलेऽपि प्रथममेव मुद्रितोऽभूत् । वङ्ग(बंगाल)-देशे यथा कथंचिदसौ मुद्रित इति केवलं श्रूयते स्म । तदानीं च संशोधन-कर्मणि यावदपेक्षितानि साधनानि नाऽऽसन् । किंचैतद्देशे तदध्ययनाध्यापनप्र-चारोऽपि विलयं गत इवाऽऽसीत् । एतादृशव्यवस्थान्तरे त्रुटितानि अतिजीर्णतया स्थले स्थले निर्मृष्टाक्षराणि लेखकाज्ञानाद्वा तत्पठनपाठनप्रचाराभावाद्वा विपर्यासं गतान्यप्यत्यशुद्धान्यपि कतिचित्तत्प्रत्यन्तराणि महता प्रयत्नेन संपाद्यानि सहा-यभूतान्यभूवन् । ततश्च लेखकदोषात्कीलकयोजकदोषाद्दृष्टिदोषाच्चापि स्थले स्थले ग्रन्थो वा पाठानामधरोत्तरीभावो वाऽपि वैपरीत्यं जुषते स्मेति मन्ये । अथ द्वितीयमुद्रणावृत्तिसमये संप्राप्ते प्रथमावृत्तिस्थितानि स्खलितानि परिमा-र्जितव्यानीति मनस्यकरवम् । ततस्तत्तद्दर्शनसंबन्धीनि संस्कृतपुस्तकानि शारी-रकमाध्वरामानुजभाष्यादीनि तथा तत्तद्दर्शनानामाङ्ग्लीयभाषान्तराणि महारा-ष्ट्रभाषान्तराणि चान्यान्यपि तदुपयुक्तानि पुस्तकानि संपाद्य संवत्सरपर्यन्तमास्था-पूर्वकं पुनः पुनर्वाचनमकार्षम् । अथ च वे०शा०सं० आचार्यप्रकपदविभूषित-बापटोपाह्वविष्णुशास्त्रिणां सविधे प्रत्यहं गत्वा सार्धसंवत्सरपर्यन्तमामूलादस्य ग्रन्थस्य तन्मुखाच्छ्रवणमप्यकार्षम । एवमवश्यापेक्षितां पूर्वभाविनीं साधनसामग्रीं सिद्धां कृत्वैतत्संशोधने प्रवृत्तोऽभूवमहम् । तत्र प्रथमावृत्तिस्थितानि प्रमादस्थला-नि सर्वाण्यपि यथामति विचार्य संशुद्धतां लम्भितानि । तथा पाठाश्चापि येऽधः-स्थितियोग्या अप्यूर्ध्वं गता आसंस्ते स्वस्थानेऽधो निवेशिताः । तत्संसूचनायैवं च तदग्रे—एतादृक्तिर्यग्रेखारूपं चिह्नं प्रदत्तमस्ति । ये च पाठा ऊर्ध्वस्थिति-मर्हन्तोऽप्यधः पतितास्त उपरि योग्यस्थलं प्रापिताः सन्ति ।

अत्र प्रसङ्गागतमुपेक्षानर्हमिति किंचिन्निवेद्यते—वे०शा०सं० महामहोपाध्या-यपदप्रमण्डितैरभ्यंकरोपाह्ववासुदेवशास्त्रिभिरभिनवां दर्शनाङ्कुराभिधां टीकां विर-च्य तत्संवलितः सर्वदर्शनसंग्रहो (भाण्डारकरइन्स्टिट्यूटसंस्थायां) मुद्रितः । सु

त्यातीव सुपरिशुद्धः। टीकाऽपि सुविशदा च सुलभार्थावबोधा च दर्शनकारहृत्त-त्त्वावगाहिनी चेत्यतीव हृदयंगमा। प्रार्थये च सर्वदर्शनसंग्रहग्रन्थरहस्यजिज्ञासू-नेकवारमपि सा भवद्भिः प्रेक्षणीयेति। अनेन च पुस्तकेनैतद्ग्रन्थसंशोधनेऽनुपमं साहाय्यमाचरितमिति स्मरामि गुरुवर्याणां महामहोपाध्यायवासुदेवशास्त्रिणां मुहुर्मुहुरुपकारभारम्। तथा वे० शा० सं० आचार्यभक्तविष्णुशास्त्रिभिरपि स्वकीयं बहुमूल्यं कालं मदर्थं व्ययीकृत्य बहूपकृतमिति सप्रमोदमभिनन्दये।

ननु यद्येवमन्यत्र मुद्रितोऽयं निबन्धग्रन्थस्तर्हि किमर्थमयं पुनर्मुद्रणे प्रयास इति चेत्प्रथमावृत्तौ समाप्तायां पुनस्तदावृत्तिः प्रकाशनीयेति सामान्यत एतत्सं-स्थासमयस्तदनुसारेणेति ब्रूमः। किंच यथैतत्सटीकं पुस्तकं महत्तथा तन्मूल्य-मपि महद्दशरूपकपरिमितमिति कृत्वा न सर्वेषां सौलभ्येन प्राप्यम्। अपि चाधीयिषूणां छात्राणां न टीका तावत्युपयोगिनी भवति। किंत्वध्यापयितुरेव स्थलविशेषे कंचिद्विशेषं द्रष्टुमिति महन्महत एवोपकुर्यात्। एतदनुसंधायैव चेयमावृत्तिः पूर्वापेक्षया वर्धिताऽपि न तदनुसारेण तन्मूल्यं वर्धितं किंतु पूर्ववद्रू-पकद्वयमेवावस्थापितम्। तस्माद्यथैव च सुस्नापितं स्वलंकृतं निर्मलं सुन्दरं च बालकं न कस्यापि जिघृक्षोर्भारमावहति प्रत्युत स्वकीयकोमलगात्रसंस्पर्शात्सु-खयतीति सर्वजनीनम्, तथेदमपि पुस्तकं सुसंस्कृतं सुपरिशुद्धं स्वल्पमूल्यं विषयसुन्दरं चाध्ययनाध्यापनार्थं स्वहस्तधारणे न कस्यापि भारभूतं भवेदपि च रञ्जयेदेव वाचकमानसमिति परशामीत्यलं विस्तरेण॥

| | |
|---|---|
| पुण्यपत्तने-<br>फाल्गुनशुक्लद्वितीयायां<br>गुरुवासरे शके १८४९ | बी० ए० इत्युपपदधारी<br>आपटे-इत्युपाह्व-गणेशात्मजो<br>विनायकशर्मा। |

## उपोद्घातः।

अयि भोः सर्वदर्शनसंग्रहप्रणयिन आनन्दाश्रमस्थसंस्कृतग्रन्थावलीप्रकाशितग्रन्थग्राहकमाननीयमहाशयाः—

ननु लभतां तत्रभवतां भवतामासेचनकतां चिराय तन्वानस्यास्य हृद्यस्य च सर्वदर्शनसंग्रहनाम्नो ग्रन्थस्याऽऽत्मदर्शनाय वासो भवत्सु पदम्। नन्वयं षण्णास्तिकदर्शनषडास्तिकदर्शनमध्वभाष्यश्रीभाष्यादिप्रौढनिबन्धैः साकं पास्पर्धीति भवतां मतिः।

अयं हि निबन्धस्तत्तद्दर्शनकाराणां निबन्धौघानुदधेरिव पयःपूरानालोड्य भगवता माधवेनेव माधवाचार्येण पीयूषकलश इवोद्धृतः सर्वदर्शनसंग्रहनाम्ना प्रसेवितश्च।

दर्शनपदार्थस्त्वेतादृशस्तत्र दृश्यते ज्ञायत आत्माऽनेनेति व्युत्पत्त्या ज्ञानसामान्यार्थकाद्दृशिधातोः करणल्युटा निष्पन्नदर्शनशब्देन चेतनवस्तुविषयविचारप्रवणमागमात्मकं शास्त्रमुच्यते।

दर्शनगतसंख्याविषये तैर्थिकानां विविधानि मतान्युपलभ्यन्ते। केचित्खलु पूर्वोत्तरमीमांसाद्वयं सेश्वरनिरीश्वरसांख्यद्वयं सप्तपदार्थषोडशपदार्थाभिधायिन्यायद्वयं चेति षड्दर्शनान्याहुः। तदुक्तम्—

कपिलस्य कणादस्य गौतमस्य पतञ्जलेः।
व्यासस्य जैमिनेश्चापि शास्त्राण्याहुः षडेव हि॥ इति।

अपरे तु मीमांसकसांख्यनैयायिकबौद्धजैनचार्वाकाणां दर्शनानि षड्दर्शनीं प्राहुः। अन्ये तु पुनः सौत्रान्तिकवैभाषिकयोगाचारमाध्यमिकेति भेदभिन्नबौद्धेन जैनलौकायतिकाभ्यां च सहितमाद्यदर्शनषट्कं द्वादशदर्शनीति संगिरन्ते। अनेन तु निबन्धकर्त्राऽतोऽप्यधिकानीति मिलित्वा षोडश दर्शनानि संगृहीतानि। अत एव च सर्वदर्शनसंग्रहनाम्ना प्रथयत्ययमुम्। दर्शनानां नामानि मूल एव स्फुटानीति न पुनरिहोल्लिख्यन्ते।

तानि च दर्शनानि द्विविधानि। अभेदग्राहीणि भेदग्राहीणि च। तत्र शांकरदर्शनमभेदवादीति सुप्रसिद्धो डिण्डिमः सर्वत्रेति न तत्र विचारलेशावकाशोऽपि। पाणिनिदर्शनमप्यभेदमेव वदतीति तत्रस्थग्रन्थादवगम्यते। तथा हि—अभ्युपगताद्वितीयत्वनिर्वाहाय वाच्यवाचकयोरविभागः ... इत्युपक्रम्य—

वाच्या सा सर्वशब्दानां शब्दाच्च न पृथक्ततः।
अपृक्त्वेऽपि संबन्धस्तयोर्जीवात्मनोरिव॥

वाच्यवाचकयोरभेदेऽपि तयोः संबन्धः केवलं कल्पनावशाद्भासते न तु वास्तवः। परमार्थतस्त्वभेद एवेत्यर्थः। तत्र दृष्टान्तो यथा जीवात्मपरमात्मनोर्वास्तवाभेदेऽपि कल्पनावशाद्व्यावहारिकस्तयोः संबन्धोऽवभासते तद्वदित्युक्तम्। एवं चैतद्दर्शनमभेदवादीति स्पष्टमेवोक्तम्। एवमेव मीमांसादर्शनमपीति बोद्धव्यम्। तथा च दर्शनत्रयमभेदमवलम्बत इति स्पष्टमेवेति। तदन्यानि भेदवादीनि।

अभेदवादीन्येव श्रौतानीत्युच्यन्ते। भेदवादीनि च तार्किकाणीति। प्राधान्येन श्रुतितो मूलतत्त्वप्रतिपादकानि श्रौतानि। मुख्यतया तर्केण मूलतत्त्वान्वेषकाणि च तार्किकाणि। प्रकारान्तरेण पुनर्द्विविधानि। नास्तिकान्यास्तिकानि चेति। परलोकादिनास्तित्वग्राहकाणि नास्तिकानि। परलोकाद्यस्तित्वग्राहीणि चाऽऽस्तिकानि। चार्वाकदर्शनं भेदचतुष्टययुतं बौद्धदर्शनमार्हतदर्शनं चेति नास्तिकदर्शनानि। तदन्यानि त्रयोदशाऽऽस्तिकदर्शनानि।

अस्य च सर्वदर्शनसंग्रहनाम्नो निबन्धस्य प्रणेता सुगृहीतनामधेयः श्रीसायणमाधवाचार्य इति—

> श्रीमत्सायणदुग्धाब्धिकौस्तुभेन महौजसा।
> क्रियते माधवार्येण सर्वदर्शनसंग्रहः॥

इति ग्रन्थारम्भे स्वयमेवोक्तत्वान्निश्चीयते।

अयं हि माधवाचार्यो दक्षिणदेशे तुङ्गभद्रानदीतीरे पम्पासरःसविधे संप्रति 'गोवलकोंडा' इति नाम्ना प्रसिद्धिं गते विजयनगरे वैदिकमार्गप्रवर्तकस्य स्वप्रतापमार्तण्डपरिशोषिताहितप्रसवजौघस्य वीरबुक्कनाम्नो मनुजेन्द्रस्य देवेन्द्रस्य बृहस्पतिरिव कुलगुरुर्मन्त्री निखिलराजकार्यधुरंधर आसीत्। तथा शाकीये त्रयोदशशतकोत्तरार्धे सायणवंशीयस्य यजुःशाखिनो मायणाचार्यस्य भार्यायां श्रीमत्यां प्रादुरासीदितीतिहासकोविदाः कथयन्ति।

अनेन च राजकार्यधुरंधरेण जगतीतलवर्तिनिखिलविद्वत्प्रकाण्डमण्डलमण्डनायमानेन मन्त्रिप्रवरेण पूर्वस्मिन्वयसि वीरबुक्कभूपतेस्तत्पुत्रस्य हरिहराख्यस्य च प्रधानममात्यपदमुररीकृत्य समीचीनतया राजकार्यभरं निर्वाह्योत्तरस्मिन्वयसि भगवत्पूज्यपादश्रीशंकराचार्याणां शारदपीठे शृङ्गेर (शृंगेरी) पुरे तत्कालवर्तिपीठाधिष्ठितश्रीशंकरानन्दगुरूणां सकाशाच्चतुर्थाश्रमं स्वीकृत्य तत्पट्टाधिकारः समग्राहि। तत आरभ्यैव विद्यारण्य इति समाख्यया प्रथिताऽभूत्। अयं चाऽऽद्यशंकराचार्यात्षड्विंशो विद्यारण्यभारतीति परम्परया तत्रत्यवक्तृमुखाच्छ्रूयते।

अनेन हि माधवाचार्येण नैकशो ग्रन्थाः प्रणीताः। तदन्तर्गत एवायं प्रकृतः सर्वदर्शनसंग्रहनामा निबन्धः।

अत्रायं प्रश्नः पुरतः प्रादुर्भवति । किमयं ग्रन्थश्चतुर्थाश्रमस्वीकरणात्प्राक्प्रणीतोऽथवा तदनन्तरमिति । तत्र चरमाश्रमदीक्षाग्रहणात्प्रागेवायं निबन्धो निरमायीत्यनुमीयते । कुत इति चेच्छ्रूयताम् । यतोऽयं माधवाचार्यः स्वयमेव ग्रन्थारम्भे श्रीमत्सायणदुग्धाब्धीति श्लोके माधवेतिस्वनामनिर्देशपुरःसरं स्वः स्विमञ्जनकतया सायणवंशसंबन्धमवगमयति । यदि चायं निबन्धो जगद्गुरुपीठाधिष्ठानादूर्ध्वं कृतः स्यात्तर्हि संन्यासाश्रमस्वीकारमहिम्नैव तत्प्राग्भाविस्ववंशगोत्रसंबन्धादेर्निवृत्तत्वाद्ग्रन्थनिर्माणसमये तादृशसंबन्धस्याविद्यमानत्वेनासत्संबन्धकीर्तनस्य चानुचितत्वेन कथमयं सुधीर्माधवः सदावेदितुं प्रवृत्तोऽसत्संबन्धं निर्दिशेत् । तथा चोक्तं विश्वेश्वरसरस्वतीप्रणीते यतिधर्मसंग्रहे——

नामगोत्रादि चरणं देशं वासं श्रुतं कुलम् ।
वयो वृत्तं व्रतं शीलं ख्यापयेन्नैव सद्यतिः ॥ इति ।

माधवेति नामापि च चतुर्थाश्रमग्रहणात्प्राक्तनमेव । तादृशान्वयाम्वयविशिष्टत्वेनैवाऽऽत्मनो माधवेति नाम्नोल्लेखकरणात् । विद्यारण्य इति समाख्यायाः संन्यासदीक्षाग्रहणसमनन्तरभाविनीत्वेन पूर्वकपरकोविदपरम्परयेदानीमपि श्रूयमाणत्वाच्च ।

पञ्चदशीग्रन्थस्तु शारदापीठाक्रमणादूर्ध्वं विरचित इति प्रतीयते । यतस्तत्र संन्यासाश्रमग्रहणात्पूर्वंभाविनो वंशनामसंबन्धस्य कस्यचिदपि निर्देशमन्तरैव केवलं जगद्गुरुपीठाधिकारग्राहकशंकरानन्दगुरुपादाम्बुरुहनमनं विधाय ग्रन्थारम्भः क्रियमाणो दृश्यते । यद्यपि तत्र न ग्रन्थकर्तुर्नाम्न उल्लेखस्तथाऽपि नमस्कार्यत्वेन शंकरानन्दगुरोरुपादानान्नमस्कारकर्त्रा तच्छिष्येणैव भवितव्यम् । स च शिष्यो विद्यारण्य एव । नमनकर्तृग्रन्थकर्त्रोरेकत्वलाभात् । एवं च पञ्चदश्यां दीपकपरिसमाप्त्यवसरे ‘ विद्यारण्यमुनिविरचितायां ’ इत्युल्लेखः पञ्चदश्याः संन्यासदीक्षासमनन्तरभाविनीत्वं सूचयति । यदि चायं निबन्धः पीठाधिरोहणानन्तरं कृतः स्यात्तर्हि पञ्चदश्यामिवात्रापि सायणवंशसंबन्धादिकं किमपि नोल्लिखेत् । यतश्चात्र वंशसंबन्धं कीर्तयति ततः संन्यासस्वीकारात्प्रागभवत्वमस्य निबन्धस्य सिध्यति ।

अथ पञ्चदश्यपि शारदापीठप्रवेशात्प्रागेव प्रणीतेति ब्रूषे चेत्, कथय किमिति तत्र माधवनामोल्लेखं न करोति । किमिति च तदानीमविद्यमानं शंकरानन्दगुरुसंबन्धमुद्घाटयति । आधुनिकाः संन्यासिनोऽपि दीक्षोत्तरं तत्प्राग्वर्तिनामवंशसंबन्धित्वेन नैवाऽऽत्मानं कथयन्ति । नामगोत्रादि चरणं देशं वासं श्रुतं कुलमिति निषेधात् । किंत्वाश्रमप्रतिष्ठापितनाम्नैव व्यवहरन्ति । अन्यत्सर्वं नारायणस्मरणमिति वदन्तश्च सांसारिकसंबन्धादेर्निवृत्तिं सूचयन्ति । तदात्र च्छ[illegible]

रम्भे केवलं नमस्कारेण श्रीशंकरानन्दगुरूल्लेखनं ग्रन्थकर्तुस्तदानीं चतुर्थाश्रमवर्तित्वं स्पष्टमेवावगमयति ।

एवं वेदभाष्यपराशरमाधवकालमाधवजैमिनीयन्यायमालावैयासिकन्यायमालाप्रभृतिग्रन्थेष्वपि कर्तृत्वेन माधवनामोल्लेखनं तत्तद्ग्रन्थप्रणयनसमये ग्रन्थकर्तुः संन्यासदीक्षानधिष्ठितत्वं सूचयतीति बोध्यम् ।

यद्यपि मुद्रितशंकरदिग्विजयग्रन्थे शिरोभागे 'विद्यारण्यविरचितः' इत्युल्लेखो दृश्यते, तथाऽपि तथोल्लेखे चतुर्थाश्रमग्रहणोत्तरं तद्विरचितत्वे च न दृढतरं प्रमाणं पश्यामः । प्रत्युत ... सर्गसमाप्तौ 'इति श्रीमाधवीये' इत्युक्तत्वेन संन्यासस्वीकरणात्प्राग्भाविमाधवाख्यालक्षितस्यैव तत्र कर्तृत्वेन प्रतिपादनात्सर्वदर्शनसंग्रहवच्छंकरदिग्विजयग्रन्थोऽपि भगवल्लिङ्गधारणावस्थातः प्रागेव निरमायीति निश्चीयते ।

युक्तं चैतत् । यतो जैमिनीयन्यायमालाविस्तरो माधवाचार्येण दण्डस्वीकरणात्पूर्वमेव प्रणीत इति तावन्निर्विवादम् । तत्र तस्य वीरबुक्कसंबन्धित्वेनाभिधानात् । वीरबुक्कसंबन्धश्च चरमाश्रमस्वीकारपर्यन्तमेव । न तदुत्तरमनुवर्तितुमुत्सहते । तदानीं मनःसंकल्पपूर्वकं तस्य परित्यक्तव्यत्वात् । तथा च जैमिनीयन्यायमालाविस्तरग्रन्थारम्भे——

प्रणम्य परमात्मानं श्रीविद्यातीर्थरूपिणम् ।

इति यत्प्रणम्यत्वेन गुरोरभिधानं न तद्दीक्षाग्राहकगुरुविषयकम् । तदानीं दीक्षाया एवाभावात् । किंतु विद्याग्राहकगुरुविषयकमेवेति वक्तव्यम् । तदेव च पद्यार्धं शंकरदिग्विजयग्रन्थारम्भे दृश्यते । तद्यथा——

प्रणम्य परमात्मानं श्रीविद्यातीर्थरूपिणम् ।
प्राचीनशंकरजये सारः संगृह्यते स्फुटम् ॥ इति ।

एवं च गुरूल्लेखनस्य विद्याग्राहकगुरुविषयत्वेनान्यथासिद्धेर्नात्र पञ्चदश्यामिव पारिव्राज्याङ्गीकरणानन्तरं विरचितत्वे किंचिदनन्यथासिद्धं लिङ्गं दृष्टिपथं समारोहति । एवं च शंकरदिग्विजयोऽपि माधवाचार्येण भगवल्लिङ्गस्वीकरणात्प्रागेव विरचित इति मे मतिः । एतद्विषय इतिहाससंशोधकैर्युक्तायुक्तं विचार्यम् ... दृश्येत्क्षन्तव्यम् ।

इह खलु जगति हिरण्यगर्भप्रभृतिस्तम्बपर्यन्तः सर्वोऽप्युच्चावचः प्राणभृद्वर्गो निसर्गत एव दुःजिहासुरभीप्सुश्च भवतीत्यनुभवसाक्षिकमेतच्चात्र विवादः कस्यचिदपि दर्शनकारस्य । अभीष्टं चास्य सुखविशेष एव मोक्षापरपर्यायः । स च सुखविशेषो ज्ञानैकसाध्यः । ज्ञानादेव तु कैवल्यमित्युक्तत्वात् । नहि ज्ञानेन सदृशं पवित्रमिह विद्यते, इति गीतासु भगवता ज्ञानमाहात्म्यातिशयस्यापि गीत-

त्वाच्च । यद्यपि लोके यत्किंचिदिष्टं वस्तु प्रयत्नसहस्रेणापि ज्ञानिनाऽपि न पार्यते संपादयितुं तत्प्रभूतैश्वर्यसंपन्नः कोऽपि द्रव्यबलादनायासेनैव संसाधयतीति ज्ञानापेक्षया द्रव्यस्यैवाधिकः प्रभावो लक्ष्यते तथाऽपि यस्य प्रभावात्सुदुर्लभमपि संपिपादयिषसि तद्द्रव्यं बुद्धिप्रभावेणैव लभ्यं नान्येन केनापीति ज्ञानवैभवमेव सर्वोत्कर्षेण सर्वत्र विजयते । अत एव भ्रष्टराज्यैरपि त्रयोदशवर्षपर्यन्तं वनाद्वनान्तरं परिभ्रमद्भिरपि पाण्डवैः केवलं भगवत्साहाय्येनैव करदीकृतसकलसामन्तमण्डलस्यैश्वर्यशिखरारूढस्य सार्वभौमचक्रवर्तिनोऽष्टादशाक्षौहिणीनायकस्य भ्रातृशतपरिवारितस्य दुर्योधनस्यापि राज्ञः पराजयः समपादि । द्रव्यं तु केवलं तादृशबुद्धौ साहाय्यकारि भवति न तु तस्य प्राधान्यमिति सर्वजनीनमेतत् । तच्च ज्ञानं तत्त्वविषयकमेव । तत्त्वं च तस्य वस्तुनो भावस्तत्त्वमिति व्युत्पत्त्या वस्तुनो मूलस्वरूपमुच्यते । मूलस्वरूपज्ञानमेव हि मोक्षोपयोगि भवति । एवं च यस्य ज्ञानं मोक्षोपयोगि भवति तत्तत्त्वमिति सामान्यतस्तत्त्वलक्षणं पर्यवस्यति । तादृशतत्त्वज्ञानोपजीव्योऽभीष्टः सुखविशेषो हि तत्तद्दर्शनकारमतिवैचित्र्यात्प्रतिदर्शनं भिन्नः । तदनुसारेण चाभीष्यमाणसुखविशेषसाधनीभूतज्ञानप्रयोजकतत्त्वान्यपि भिन्नान्येवेत्यर्थाद्दर्शनानामपि भेदः सिध्यतीत्यतः संप्रति तेषां को वा विषयः कीदृशं च तस्य स्वरूपमित्यादि संक्षिप्य किंचिन्निरूप्यते । तत्र प्रथमोपस्थितस्योपेक्षानर्हत्वेन प्रथमतश्चार्वाकदर्शनमेवावलम्ब्यते ।

नास्तिकशिरोमणिना चार्वाकेण प्रतिपादितं दर्शनं चार्वाकदर्शनमित्युच्यते । यस्य मते यत्स्पर्शेन्द्रियेण मृदुकठोरशीतोष्णादयः स्पर्शा उपलभ्यन्ते, यद्रसनेन्द्रियेण कट्वम्लमधुरादयो रसा अनुभूयन्ते, यद्घ्राणेन्द्रियेण मृगमदकुङ्कुमप्रभृतिसुरभिवस्तुपरिमलोद्गारा आघ्रायन्ते, यच्चक्षुरिन्द्रियेण घटपटस्तम्भाम्भोरुहादयः पदार्थाः स्थावरजंगमाः परिचीयन्ते, यच्च श्रोत्रेन्द्रियेण तन्त्रीगीतादयः स्त्रीगीतादयश्च मधुरध्वनयः श्रोश्रूयन्ते तदेवैकं प्रत्यक्षं प्रमाणम् । अन्यदनुमानादिकं त्वप्रमाणमेव । अतो न परलोको न वेदोदितो धर्मो न पुण्यं न पापं नापि वाऽनुमानादिगम्यमीश्वरादिकमन्यत् । किंतु लोकप्रसिद्धो राजैव परमेश्वरः । देह एवाऽऽत्मा । मरणमेव मोक्षः । कान्तालिङ्गनादिजन्यं सुखमेव पुरुषार्थः । कण्टकादिव्यथाजन्यं दुःखमेव निरयः । तस्मात्खाद्याखाद्यादिविचारानिरपेक्षं यावच्छक्यं यथेच्छं सुखं संपादनीयमिति निष्कर्षः । तदेतन्मतं श्रवणसमये मनोहरमपि परिणामेऽत्यन्तं भयावहत्वाच्छिष्टैर्विगर्हितत्वाच्चानुपादेयमेव ।

बुद्धाख्यं देवमनुसरन्तो बौद्धास्तेषां दर्शनं बौद्धदर्शनम् । ते च बौद्धा माध्यमिकयोगाचारसौत्रान्तिकवैभाषिकनामभिश्चतुर्विधाः प्रसिद्धाः । तथा हि—भगवता बुद्धेन प्रथमतः स्वशिष्येभ्यः सर्वं शून्यमित्युपदेशे कृते यैः शिष्यैस्तदेव

यथार्थत्वेन परिगृहीतं न तदुपर्याक्षेपः कृतोऽतस्ते मध्यमबुद्धित्वान्माध्यमिकेत्याख्या-मापुः । इत्थं हि तेषामाशयः—सर्वं क्षणिकं, सर्वं दुःखं, सर्वं स्वलक्षणं सर्वं शून्यम्, इति भावनाचतुष्टयोपदेशेन क्रमेण सर्वस्थायित्वानुकूलवेदनीयत्वसत्वा-नुगतत्वसर्वसत्यत्वानां निराकरणेन सर्वशून्यत्वमेव गुरुणा बोधिता वयमिति । अतः सर्वशून्यत्ववादिन एते ।

अपरे शिष्याः पुनः कथं सर्वस्य शून्यत्वमवगन्तुं शक्यम् । तथा सति ज्ञान-स्यापि शून्यत्वेन जगदान्ध्यं प्रसज्येत । अतो बाह्यार्थस्य शून्यत्वमस्तु नामे-त्यूचुः । शिष्येण हि द्वयं करणीयं योग आचारश्चेति । तत्राज्ञातार्थस्य ज्ञाना-याऽऽक्षेपो योगः । गुरूक्तार्थस्याङ्गीकरणमाचारः । तत्र यैः शिष्यैर्गुरूक्तं भावनाचतुष्टयं बाह्यार्थशून्यत्वं चाङ्गीकृत्य सर्वस्य शून्यत्व आक्षेपः कृतस्ते योगाचारा इति प्रथां जग्मुः । अत एते बाह्यार्थशून्यत्ववादिनो विज्ञानमात्रा-स्तित्ववादिनश्चोच्यन्ते । एतेषामयमभिप्रायः—अनादिवासनावशाद्बुद्धिरेवानेका-कारेण भासत इति प्रागुक्तगुरूपदिष्टभावनाचतुष्टयपरिचयबलात्सर्ववासनोच्छेदे विविधविषयाकारोपद्रवानुदयाद्विशुद्धज्ञानोदयो मोक्षः संपद्यत इति ।

अन्ये तु—नीलादेर्बाह्यार्थस्यासत्त्वे विज्ञानमात्रास्तित्वं वक्तुमशक्यम् । ततो बाह्यार्थोऽप्यङ्गीकरणीय एवेति प्राहुः । ततो गुरुणा भवतु नाम बाह्यार्थः परंतु न स प्रत्यक्षः किंत्वनुमेय इत्युक्ते कियत्पर्यन्तं सूत्रं भवेदिति पृष्टवान्ते सौत्रान्तिकसंज्ञया प्रसिद्धाः । सूत्रान्तं पृच्छन्ति ते सौत्रान्तिकाः । 'पृच्छतौ सुस्नातादिभ्यः' इति प्राग्वहतीयष्ठक्प्रत्ययः । अत एते बाह्यार्थानुमेयत्ववादिन इत्युच्यन्ते ।

परे च केचिच्छिष्या एवमूचुः—यथा चानुभवबलाद्बाह्यार्थो घटपटादिरुररी-क्रियते तथा प्रत्यक्षबलात्तस्यार्थस्य प्रत्यक्षत्वमप्यङ्गीकरणीयम् । एवं च बाह्ये-ष्वान्तरेषु चार्थेषु प्रत्यक्षेषु सत्सु यत्कांश्चित्प्रथमं सर्वं शून्यमित्युपदिष्टवान्गुरुः । तदनन्तरं कांश्चिद्विज्ञानमेव सदिति । ततः कांश्चिच्चोभयं बाह्यमान्तरं च सदित्यभिप्रेत्यावस्थितान्विज्ञेयमनुमेयं चेति । सेयं गुरोर्विरुद्धा भाषेति ब्रुवाणा वैभाषिकाख्यया ख्याताः । अत एवैते बाह्यार्थप्रत्यक्षत्ववादिनः सर्वास्तित्ववा-दिनश्चोच्यन्ते ।

त एते जगन्मूलकारणत्वेन पार्थिवाप्यतैजसवायवीयांश्चतुर्विधान्परमाणून्परि-कल्प्य तेषु किंचित्स्थायि सुखदं सामान्यलक्षणं सत्यं वाऽनिभालयन्तः सर्वं क्षणिकं सर्वं दुःखं सर्वं स्वलक्षणं सर्वं शून्यं चेति भावनाचतुष्टयं स्वी कुर्वन्ति ।

तथैवैषां मते ह्यार्यसत्याख्यं दुःखसमुदायमार्गनिरोधभेदाच्चतुर्विधं तत्त्वम् । तत्र प्रथमं दुःखापरपर्यायं विज्ञानवेदनासंज्ञासंस्काररूपभेदात्पञ्चविधम् । इदमेव

पञ्चस्कन्धीत्युच्यते । दुःखकारणं स्थिरत्वादिभ्रान्तिः समुदायः । दुःखतत्कारणै-तदुभयनिवृत्त्युपायः सर्वं क्षणिकमिति भावनाख्यो मार्गः । सर्वनैरात्म्यवासनारूपो निरोधः । स एव मोक्ष इत्यभिधीयते । पञ्चस्कन्धानां लक्षणं भावनाचतुष्टय-मित्येवमादिविस्तरो मूलतोऽवगन्तव्यः । प्रत्यक्षमनुमानं चेति प्रमाणद्वयवादिनश्चैते ।

अर्हन्तं परमेश्वरं मन्यमाना आर्हतास्तेषां दर्शनमार्हतदर्शनम् । अत्र जीवा-जीवौ पुण्यपापे आश्रवसंवरौ बन्धनिर्जरामोक्षाश्चेति नव तत्त्वानि । एतन्मते घटपटादयः सन्तीति न निश्चेतुं शक्यते । नापि न सन्तीति कृत्वा सर्वे पदार्था भावाभावात्मकाः । सम्यग्दर्शनसम्यग्ज्ञानसम्यक्चारित्रैश्च मोक्षः सिध्यति । स च देहस्वरूपावरणापगमे जीवस्य सततोर्ध्वगमनम् । जीवादिनवसंख्याकानां तत्त्वानां सम्यग्दर्शनादित्रयाणां च लक्षणानि मूल एव स्पष्टानीति विस्तरभिया नोच्यन्ते । चार्वाकाद्यार्हतपर्यन्ताः षट् वेदविरोधित्वान्नास्तिका इत्युच्यन्ते । वेदविरोधित्वेनैव नास्तिकत्वमित्यर्थः । इति षण्णास्तिकदर्शनस्वरूपसंक्षेपः ।

अथाऽऽस्तिकदर्शनानि । तत्र रामानुजाचार्यमते मुख्यतस्तत्त्वत्रयम् । चिद-चिदीश्वरभेदात् । तत्र चिज्जीवो भोक्ता । अचिज्जडवर्गो भोग्यम् । चिज्जड-योरन्तर्यामी संस्तन्नियामकश्चेश्वरः । स हि सविशेषः सगुणश्च । अयं ईश्वर-श्चिज्जडौ व्याप्नोतीत्यात्मशब्देनोच्यते । यो यद्व्याप्नोति स तस्याऽऽत्मा । तच्चास्य शरीरमिति चिज्जडौ परमात्मनः शरीरम् । तत्रापि जीवः परमात्मनः शरीरं भूत्वा जडस्याऽऽत्मा भवति । एतत्पदार्थत्रितयं परमार्थतः परस्परस्मा-द्भिन्नं सत्संबद्धं च भवति । अतोऽयं परमात्मा सजातीयविजातीयस्वगतभेद-त्रयसहित एवेति रामानुजाचार्या मन्यन्ते । भेदेऽपि शरीरविशिष्टस्यैकत्वाद्विशिष्टा-द्वैतवादमाश्रयन्ते । मायावादमसहमानाश्च विवर्तवादं प्रतिक्षिपन्ति । परिणामवादं स्वीकुर्वन्तश्च सत्ख्यातिं समर्थयन्ते । एतेषां मते जीवन्मुक्तिर्नास्ति । मोक्षेऽपि जीवब्रह्मणोर्भेद एव । याथातथ्येन परमात्मस्वरूपावबोधपूर्वकतत्कैङ्कर्यमेव मोक्ष इति बोध्यम् ।

अथ पूर्णप्रज्ञदर्शनस्वरूपं निरूप्यते । पूर्णा आत्मतत्त्वप्रतिपादकशास्त्रे प्रज्ञा मतिर्यस्य स पूर्णप्रज्ञः । मध्वाचार्य इत्यर्थः । तेन प्रवर्तितं दर्शनं पूर्णप्रज्ञदर्श-नम् । अत एतद्दर्शनं मध्वदर्शनमित्युच्यते । अस्यैव मध्वमन्दिर इति आन-न्दतीर्थ इति चापरं नाम । अस्य पूर्णप्रज्ञाचार्यस्य जन्म शाके एकादशशतमिते (११००) वर्षे कर्णाटकदेशे रजतपीठाख्ये (उडपी) ग्रामे वेदवेद्यां नार्यां मध्य-गेहाख्यात्पितुः सकाशादाविरभूत् । एतस्य विद्याध्यापको गुरुरच्युतप्रेक्षाचार्यः । अयं हि पूर्णप्रज्ञाचार्यो वायोस्तृतीयोऽवतार इति मन्यन्ते तदनुयायिनश्च तदुक्तम्—

प्रथमस्तु हनूमान्स्याद्द्वितीयो भीम एव च ।
पूर्णप्रज्ञस्तृतीयश्च भगवत्कार्यसाधकः ॥ इति ।

अनेन च महाभारततात्पर्यनिर्णयनामा ग्रन्थो विरचितः । तद्ग्रन्थसमाप्त्य-वसरे चायं श्लोको दृश्यते—

मध्वो यत्तु तृतीयमेतदमुना ग्रन्थः कृतः केशवे । इति ।

वायोर्देवस्य यत्तृतीयं रूपं मध्वाख्यं तेनामुना मध्वाचार्येण केशवार्पणबुद्ध्याऽयं महाभारततात्पर्यनिर्णयाख्यो ग्रन्थः कृत इति तदर्थः । अस्य मतं द्वैतवादः । द्विधा इतं द्वीतम् । तस्य भावो द्वैतम् । भेद इति यावत् । स च भेदः पञ्चविधः—जीवेश्वरभेदो जडेश्वरभेदो जीवजडभेदो जीवानां मिथो भेदो जडानां मिथो भेदश्चेति । तदिदं भेदपञ्चकं सत्यमनादि च । यदि च सादि स्यात्तर्हि नाशमाप्नुयात् । न च कदाऽपि नाशमुपैति । तथा यदि चेदं भेदपञ्चकमसत्यं स्यात्तर्हि तस्य भ्रान्तिकल्पितत्वं स्वीकार्यं स्यात् । न चेदं भ्रान्तिकल्पितमिति मन्तव्यम् । कल्पितस्य निवृत्त्यवश्यंभावात् । नैव चेदं निवर्तते । तस्मात्सत्योऽनादिश्चायं भेदप्रपञ्चः । एवं च द्वैतं न विद्यत इति यन्मतं तदज्ञानिनां मतमिति बोद्धव्यम् । श्रुतिरप्यत्रार्थे प्रमाणम् । तथा हि—'सत्य आत्मा सत्यो जीवः सत्यं भिदा सत्यं भिदा सत्यं भिदा मैवारुवण्यो मैवारुवण्यो मैवारुवण्यः' इति । अस्यार्थः । आत्मा परमात्मा सत्यः । त्रिकालाबाधित इत्यर्थः । तथा जीवः सत्यः । तयोर्जीवेश्वरयोर्भेदश्चापि सत्यः। मैवारुवण्य इत्यत्र मा एव आरुवण्य इति पदत्रयम् । तत्र मा इति निषेधार्थकमव्ययम् । एवेति निश्चयद्योतको निपातः । आरुभिर्दैत्यैर्वन्यो भजनीय आरुवण्यः । एवं च परमात्मा दुष्टजनसेव्यो नैव भवतीत्यर्थः । सत्यं भिदेति मैवारुवण्य इति च त्रिर्वचनं भेदसत्यत्वदार्ढ्यं प्रदर्शयितुम् । अस्यां श्रुतौ स्पष्टमेव भेदोऽभिहितः । नह्यभेदे सति भेददार्ढ्यं सेव्यसेवकभावो वाऽञ्जसा संगच्छते । अनुमानेनापि भेदोऽवसीयते । परमेश्वरं पक्षीकृत्य तत्र जीवाद्भेदः साध्यते । जीवं प्रतीश्वरस्य सेव्यत्वात् । यो यं प्रति सेव्यो भवति स तस्माद्भिन्नः । यथा भृत्याद्राजेति । अत्र भृत्यः सेवको राजा च सेव्यः । तस्मात्सेवकात्सेव्यो राजा भिन्नो दृष्ट इति । अयमाशयः । प्रभूतं धनं मे स्याद्दारिद्र्यं लेशतोऽपि मा भूदिति प्रार्थयमानाः पुरुषा राज्ञो गुणोत्कर्षं कीर्तयेयुश्चेत्प्रीतो राजा तेषामभिलषितं पूरयेत् । परंतु यदि ते सर्वाङ्गीणं त्वद्राज्यपदमेव देहीत्यभिकाङ्क्षेयुस्तर्हि नेष्टप्राप्तिलाभो भवेत्प्रत्युत क्रोधोत्पादनेनानर्थावाप्तिः स्यात् । तदुक्तम्—

घातयन्ति हि राजानो राजाऽहमिति वादिनः ।
ददत्यखिलमिष्टं च स्वगुणोत्कर्षवादिनाम् ॥ इति ।

तथा च महद्भिः सह स्वसाम्योद्भावनमपि महतामप्रीतिकरं भवति किमुत तैः साकं स्वाभेदसंपादनमित्यर्थः । एवं च जीवेश्वरयोरभेदः सर्वथा दुर्घटः । न च ब्रह्म वेद ब्रह्मैव भवतीतिश्रुतिबलाज्जीवेश्वरयोरभेदः शक्यशङ्क इति वाच्यम् । संपूज्य ब्राह्मणं भक्त्या शूद्रोऽपि ब्राह्मणो भवेत् । इतिवत्प्रशंसापरत्वादभेदश्रुतेः । नहि ब्राह्मणपूजया शूद्रो ब्राह्मणजातितां लभते, किंतु ब्राह्मणवत्प्रशंसनीयो भवतीत्यर्थः । तत्त्वमसीति महावाक्यमपि भेदप्रतिपादकमेव । तस्य त्वं तत्त्वमिति षष्ठीसमासमङ्गीकृत्य तस्येश्वरस्य त्वं दासोऽसीत्यर्थात् । अथवा 'स आत्मा तत्त्वमसि श्वेतकेतो' इत्युद्दालकस्य स्वपुत्रं श्वेतकेतुं प्रत्युपदेशपरे वाक्ये आत्मा अतत् त्वम् इति पदच्छेदः । अतदित्यत्र च नञर्थो भेदः । तथा च यः स्वातन्त्र्यादिगुणोपेतः स एव परमात्मा । त्वं तु—अतत्, तस्मादात्मनो भिन्नः परतन्त्रो जीवोऽसीत्यर्थात् । एवं च जीवेश्वरयोः सेव्यसेवकभावात्तयोर्भेदः सिद्धः । सेवा च—अङ्कननामकरणभजनभेदात्त्रिविधा । तत्राङ्कनं नाम शङ्खचक्रादिनारायणायुधलाञ्छितमुद्राधारणम् । तदपि 'अतप्ततनूर्न तदामो अश्नुते' इति तैत्तिरीयकोपनिषच्छ्रुतेस्तप्तमुद्राधारणं मुख्यम् । योऽतप्ततनूरत एवाऽऽमः स तद्विष्णुपदं नाश्नुत इति तदर्थं मन्यन्ते मध्वानुयायिनः । तथा चोक्तं ब्रह्माण्डपुराणे—

कृत्वा धातुमयीं मुद्रां तापयित्वा स्वकां तनुम् ।
चक्रादिचिह्नितां भूप धारयेद्वैष्णवो नरः ॥ इति ।

पुत्रादीनां केशवादिनाम्ना व्यवहारो नामकरणमुच्यते । तेन च निरन्तरं नारायणस्मरणं भवति । भजनं तु कायिकवाचिकमानसिकभेदेन दशविधम् । तत्र सत्यं हितं प्रियं स्वाध्यायश्चेति चतुर्विधं वाचिकम् । दानं परित्राणं परिरक्षणं चेति त्रिविधं कायिकम् । दया स्पृहा श्रद्धा चेति त्रिविधं मानसिकम् । सर्वस्य भजनस्य विष्णुप्रसादसंपादनं प्रयोजनम् । जीवोऽणुपरिमाणः । न मध्यमपरिमाणो नापि विभुः । स च मोक्षावस्थायामपि परमेश्वरस्य दास एव । अपौरुषेयो वेदो नित्यश्च । तस्य च स्वतः प्रामाण्यमित्यादि मध्वाचार्या मन्यन्ते । प्रत्यक्षमनुमानं शब्दश्चेति प्रमाणत्रयवादिनश्चैते । एतेषां मते जगत्कर्तृत्वादिरहितं दुःखामिश्रितं परिपूर्णं सुखमेव मोक्षः । स च विष्णुप्रसादादेव लभ्यः । विष्णुप्रसादश्च तद्गुणोत्कर्षज्ञानादेव भवति । नाभेदज्ञानात् । तदुक्तम्——

तस्मिन्प्रसन्ने किमिहास्त्यलभ्यं धर्मार्थकामैरलमल्पकास्ते ।
समाश्रिताद्ब्रह्मतरोरनन्तान्निःसंशयं मुक्तिफलं प्रयान्ति ॥

इति मध्वदर्शनसंक्षेपः ।

नकुलीशपाशुपतदर्शने पशुपतिना महेश्वरेण जीवानां पाशनिरासकत्वेन कार्यकारणयोगविधिदुःखान्तरूपं तत्त्वपञ्चकं प्रतिपादितम् । पशुपतिशब्दार्थश्चैवं व्याख्यातोऽभियुक्तैः—

ब्रह्माद्याः स्तम्बपर्यन्ताः पशवः परिकीर्तिताः ।
तेषां हि नायको यस्माच्छिवः पशुपतिः स्मृतः ॥ इति ।

अत्र जगतीतलवर्तिचेतनाचेतननिखिलपदार्थजातं कार्यशब्देनोच्यते । कारणशब्देनेश्वरः ; स च स्वतन्त्रः । जपध्यानादिकं योगशब्देनाभिधीयते । त्रिषवणं भस्मस्नानादिकं व्रतं विधिरुच्यते । दुःखनिरासपूर्वकमीश्वरभावो दुःखान्तशब्देनोक्तः । स एव परमपुरुषार्थो मोक्ष इति ।

शैवदर्शने पाशविमोक्षणार्थं षट् तत्त्वानि पतिविद्याविद्यापशुपाशकारणाख्यान्युपदिष्टानि । तत्र पतिः शिवः । विद्या तत्त्वज्ञानम् । अविद्या मिथ्याज्ञानम् । पाशो मलकर्ममायारोधशक्त्याख्यश्चतुर्विधः । पशुर्जीवः । पाशनिवृत्तौ कारणं जपध्यानचर्यादिकामिति । तदुक्तम्—

पतिविद्ये तथाऽविद्या पशुः पाशश्च कारणम् ।
तन्निवृत्ताविति प्रोक्ताः पदार्थाः षट् समासतः ॥ इति ।

एतेषां तत्त्वानां साधीचीन्येन ज्ञानात्पाशविमोचने संजाते शिवत्वप्राप्तिरूपो मोक्षः सिध्यतीति शैवानां मतम् ।

मोक्षप्राप्तौ प्रत्यभिज्ञैव मुख्यं साधनमिति मन्यमाना माहेश्वरास्त्वेवं प्रतिपादयन्ति—पूर्णस्वतन्त्र ईश्वरो जगन्निर्माणकरणविषये न किमपि कर्मादिकं साधनमपेक्षते । किंतु स्वेच्छयैव सर्वं निर्मिमीते । जीवाः परस्परं भिन्ना अपि न परमेश्वराद्भेदमर्हन्ति । जीवेश्वरयोश्चैतन्यस्वभावाविशेषात् । परमेश्वरे जीवतादात्म्यस्य स्वानुभवसिद्धत्वाच्च । अतो जीवैस्तत्तादात्म्यसंपत्त्यर्थं प्रत्यभिज्ञैवाऽऽश्रयणीया । प्रत्यभिज्ञा च अहमीश्वर एव न तद्भिन्न इत्येतादृशः साक्षात्कारः । तादृशेन केवलेन साक्षात्कारेणैवाभ्युदयो मोक्षश्च संपद्यते । न तदर्थं प्राणायामादेरपेक्षा । नापि कायशोषणस्य भस्मस्नानादेर्जपपरिचर्यादेश्चापेक्षेति । यद्यपीश्वरवज्जीवात्माऽपि चैतन्यस्वरूपेणैव प्रकाशते तथाऽपि मायावशादंशेनैव प्रकाशते । परिपूर्णचैतन्यस्वरूपेण प्रकाशनार्थं तु प्रत्यभिज्ञाऽऽवश्यकीति पूर्णात्मलाभ एव मोक्ष इति प्रत्यभिज्ञादर्शनानुसारिणां मतम् ।

इत्थं रसेश्वरदर्शनस्वरूपं संक्षेपतो विव्रियते—पारदादिपदवाच्यो यो रसस्वरूप ईश्वरो रसेश्वरः । सोऽयं रसेश्वरः सेव्यमानः शरीरदार्ढ्यसंपादनद्वारा मुक्तेर्हेतुरिति मे

माहेश्वरा मन्यन्ते तेऽप्युपचाराद्रसेश्वरशब्देनाभिधीयन्ते । तैस्ते रसेश्वरपदवाच्यैः प्रवर्तितं दर्शनं रसेश्वरदर्शनमित्युच्यते । एतेऽपि न परमेश्वराज्जीवानां पार्थक्यं सहन्ते, किंतु चैतन्यस्वरूपाविशेषादीश्वरस्वरूपभूता एव जीवात्मान इत्यवगच्छन्ति । मोक्षो हि पारदरससेवनेन शरीरस्थैर्यसंपादनाज्जीवन्मुक्तिरेवेत्येषां मतम् । जीवतः सत एव या मुक्तिः सा जीवन्मुक्तिरित्यर्थः । अयमाशयः— मुक्तिर्नाम मूलाज्ञाननिवृत्तिपूर्वकस्वस्वरूपयाथात्म्यावाप्तिः । सा च ज्ञानैकसाध्या । तमेव विदित्वेति श्रुतेः । ज्ञानं चाऽऽत्मतत्त्वविषयकमेव । तत्त्वमस्यादिवाक्योत्थं ज्ञानं मोक्षस्य साधनम् । इति स्मृतेः । तच्च ज्ञानं तदभ्यासातिशयात् । अभ्यासातिशयश्च शरीरस्थैर्ये सत्येव । तदुक्तं भगवद्गोविन्दपादाचार्यैः—

इति धनशरीरभोगान्मत्वाऽनित्यान्सदैव यतनीयम् ।
मुक्तौ सा च ज्ञानात्तच्चाभ्यासात्स च स्थिरे देहे ॥ इति ।

शरीरस्थैर्यं च पारदादिपदवोच्यस्य रसस्य सेवनात् । रसस्य पारदत्वं च संसारपरपारप्रापणहेतुत्वेन । तदुक्तम्—

संसारस्य परं पारं दत्तेऽसौ पारदः स्मृतः ॥ इति ।
पारदो गदितो यस्मात्परार्थं साधकोत्तमैः ॥ इति च ।

यस्मात्साधकोत्तमैरयं परार्थं परो मोक्षस्तदर्थं मोक्षसाधनत्वेन गदितस्तस्मादसौ पारदः स्मृत इति शेषः। पारदस्य मोक्षार्थत्वं तु न साक्षात् किंतु मुक्तिप्रयोजकज्ञानसंपादकात्मतत्त्वाभ्याससाधनशरीरदार्ढ्यसंपादनद्वारैवेति तदाशयः। तथा च जीवन्मुक्तिं समीहमानेन पुरुषधौरेयेणाऽऽदौ पारदरससेवनेन शरीरस्थायित्वं संपादनीयम् । संपादिते च शरीरस्थैर्ये क्रमेण आत्मतत्त्वाभ्यासातिशयान्मिथ्याज्ञाननिवृत्तौ जायमानायां या मुक्तिः सा जीवत एव मुक्तिर्भवतीति तात्पर्यम् ।

नन्वन्यैर्दर्शनकारैः श्रवणमननादिप्रकारान्तरेणैव जीवन्मुक्तिरुक्ता न त्वदुक्तप्रकारेणेति कथमियं त्वदभिमता जीवन्मुक्तिर्विश्वसनीया भवेत् । अत एव तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये ।

षड्दर्शनेऽपि मुक्तिस्तु दर्शिता पिण्डपातने ।
करामलकवत्साऽपि प्रत्यक्षा नोपलभ्यते ॥

इति श्रुतिस्मृत्योर्देहपातानन्तरं मुक्तिः प्रदर्शिता । किंच निष्पद्यमानमिदं शरीरं हि षड्भिः कोशैर्निष्पद्यत इति श्रुतिस्मृत्यादिषु प्रसिद्धम् । तत्र त्वगसृङ्मांसरूपास्त्रयः कोशा मातुः शरीरादनुवर्तन्ते । मेदोस्थिमज्जारूपाश्च त्रयः कोशाः पितुः सकाशाल्लभ्यन्ते । तदेवैः षड्भिः कोशैर्वर्धमानं शरीरं विनश्य

रतया प्रत्यक्षतो दृश्यते । तथा च जीवत एव मुक्तिरिति कथंकारं संजायतीति । इति चेदुच्यते । षाट्कौशिकस्य देहस्यास्थिरत्वमस्तु नाम । तथाऽपि पारदाभ्रकपदाभिलप्यमाना या हरगौरीसृष्टिस्तत्संयोगजनितस्य शरीरस्य नित्यत्वमेव । हरसृष्टिः पारदः । गौरीसृष्टिस्त्वभ्रकः । तदुक्तं रसार्णवे--

अभ्रकस्तव बीजं तु मम बीजं तु पारदः । इति ।

शिवगौरीसंवादोऽयम् । अत एव चेश्वरशरीरसंभूतत्वेन पारदो रसो रसेश्वर इत्युच्यते । तादृशस्य रसेश्वरस्य सेवनेन तत्संयोगजन्यस्य नित्यशरीरस्य प्राप्तौ सत्यां षाट्कौशिकस्यास्थिरस्यापि देहस्य न परित्यागो भवति । प्रत्युत हरगौरीसृष्टिजशरीरसंबन्धेन तत्र दिव्यत्वं दाढ्यं च संपद्यते । यथा पारद (परिस) संबन्धेन लोहमपि सुवर्णं भवति तद्वत् । तदुक्तं रसहृदये--

ये चात्यक्तशरीरा हरगौरीसृष्टिजां तनुं प्राप्ताः ।

मुक्तास्ते रससिद्धा मन्त्रगणः किंकरो येषाम् ॥ इति ।

एवं च पारदरससंबन्धेन षाट्कौशिकस्य शरीरस्य लोहस्येव सुवर्णत्वे दिव्यत्वे स्थिरत्वे च संपाद्यमाने जीवत एव मुक्तिरित्युक्तिः सामीचीन्येन संगच्छते । तथा च दर्शनकारैः प्रदर्शिता जीवन्मुक्तिः करामलकवत्प्रत्यक्षा पारदपदाभिधेयरसेश्वरसेवनेन भवतीति जीवन्मुक्तिमनङ्गीकुर्वाणा रामानुजप्रभृतयोऽज्ञानिन एवेति मन्तव्यम् । अत एव विद्यारण्यैरास्तिकदर्शनसमये सर्वतो जघन्यत्वेनाऽऽदौ रामानुजदर्शनं निर्दिष्टम् । तदपेक्षया चैतद्दर्शनस्य श्रैष्ठ्याद्रामानुजदर्शनोत्तरं दर्शनचतुष्टयव्यवधानेन रसेश्वरदर्शनं निर्दिष्टमिति मन्ये ।

इति रसेश्वरदर्शनस्वरूपसंक्षेपः ।

औलूक्यदर्शनमेव वैशेषिकदर्शनं कणाददर्शनमिति चोच्यते । अक्षपाददर्शनं च नैयायिकदर्शनमित्यभिधीयते । प्रतिज्ञाहेतूदाहरणोपनयनिगमनाख्यपञ्चावयवं वाक्यं न्यायः । तं विदन्ति ते नैयायिकास्तेषां दर्शनमित्यर्थः । दर्शनद्वयेऽपि तत्त्वज्ञानान्निःश्रेयसाधिगम इत्युक्तम् । निःश्रेयसं मोक्षः । तस्याधिगमः प्राप्तिरित्यर्थः । मोक्षश्चाऽऽत्यन्तिकी दुःखनिवृत्तिः । सा च तत्त्वज्ञानादनन्तरमेव न जायते, किंतु तत्त्वज्ञानेन दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानां मध्य उत्तरोत्तरस्य नाशे सति तत्पूर्वभाविदोषादीनां नाशात्क्रमेणापवर्गः सिध्यति । तदुक्तम्-दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्ग इति । मोक्षसाधनीभूतज्ञानविषयाणि तत्त्वानि च प्रमाणप्रमेयसंशयेत्यादीनि गौतमेन षोडशोक्तानि । कणादेन तु सप्तैवोक्तानि । तेषु सप्तस्वेव गौतमोक्तानां षोडशपदार्थानां यथायथमन्तर्भावः सिध्यति । आदृतश्चायमन्तर्भावो नैयायिकैः । अमुमेव विशेषमनुलक्ष्य

षोडशपदार्थवादिनो नैयायिकाः सप्तपदार्थवादिनश्च वैशेषिका इति व्यवहारः। अतो वैशेषिकसंमतान्येव सप्त तत्त्वानि सावान्तरभेदानि निरूप्यन्ते—द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः सप्त पदार्थाः। पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसीति नव द्रव्याणि। रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहशब्दबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराश्चतुर्विंशतिर्गुणाः। चलनात्मकं पञ्चविधं कर्म। परमपरं चेति द्विविधं सामान्यम्। नित्यद्रव्यवृत्तयो विशेषास्त्वनन्ता एव। प्रागभावः प्रध्वंसाभावोऽत्यन्ताभावोऽन्योन्याभावश्चेति चत्वारोऽभावा इति। एतेषां लक्षणानि, अनुमानव्याप्त्यादिलक्षणानि चेति सर्वं मूल एव स्पष्टम्। इति काणाददर्शनम्।

जैमिनिमुनिना प्रणीतं दर्शनं जैमिनिदर्शनम्। तदनुवर्तमाना जैमिनीयाः। ते च ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादिकं हि यद्वचनत्वेन प्रमाणपदवीमवगाहेतैतादृशः सर्वज्ञत्वादिविशेषणविशिष्टः कोऽपीश्वरो नास्ति। मानुषदेहवत्त्वाविशेषेण विप्रलम्भकत्वादिदोषावश्यंभावात्। यद्यपि ब्रह्मविष्णुमहेश्वराः प्रेष्ठा देवाः सन्ति दृश्यते च तेष्वतिशायिनी संपत्। यदाह कश्चित्—

अथापि वेदहेतुत्वाद्ब्रह्मविष्णुमहेश्वराः।
कामं भवन्तु सैश्वर्याः सार्वज्ञ्यं पुरुषेषु किम्॥ इति।

तथाऽपि न तेषु सार्वज्ञ्यं संभावयितुमलम्। भ्रान्तेः पुरुषधर्मत्वाद्रागद्वेषादिमूलकनिग्रहानुग्रहग्रस्तत्वाच्च। न च प्रत्यक्षं सर्वज्ञसाधकं भवेदिति वाच्यम्।

संबद्धं वर्तमानं गृह्यते चक्षुरादिना।

इत्यभियुक्तवचनात्। तस्मात्सर्वज्ञस्य प्रामाणिकपुरुषस्याभावादेवापौरुषेयो वेदोऽतो भ्रान्त्यादिदोषानास्पदत्वात्स एव सर्वज्ञो भगवान्। तत एव च चक्षुरिन्द्रियागोचरयथावस्थितपदार्थधर्मादिस्वरूपपरिचयो याथातथ्येन भवति। वेदोदितो यागादिर्धर्म एव च स्वनुष्ठितोऽपूर्वोत्पादनद्वारा स्वर्गादि फलं जनयति। न तत्रान्यस्य कस्यचित्सांख्यनैयायिकादिपरिकल्पितस्येश्वरस्यापेक्षा। एते च मीमांसका द्विविधाः। अभिहितान्वयवादिनो भाट्टाः अन्विताभिधानवादिनः प्राभाकराः। द्विविधानामप्येतेषां मते शब्दा नित्याः। वेदानां धर्मे स्वतः सिद्धं प्रामाण्यं स्वर्गादेः प्राप्तिश्च मोक्ष इति। [ इति जैमिनिदर्शनम् ]।

सांप्रतं सांख्यदर्शनस्वरूपं निरूप्यते। ते च सांख्या द्विविधाः। सेश्वरा निरीश्वराश्च। ये तु जीवातिरिक्तं षड्विंशमीश्वरं मन्यन्ते ते सेश्वराः। अन्ये निरीश्वराः। त एत उभयेऽपि निराहुः—प्रकृत्युपरमे पुरुषस्य स्वस्वरूपेणावस्थानं मोक्षः। स च प्रकृतिपुरुषयोर्भेदज्ञानात्। भेदज्ञानं च तत्त्वज्ञानाज्जायते। तत्त्वानि

च पञ्चविंशतिसंख्याकानि । तत्र किंचित्तत्त्वं प्रकृतिरेव । किंचिद्विकृतिरेव । किंचिदुभयात्मकम् । किंचिच्चानुभयात्मकम् । त्रयाणां सत्त्वरजस्तमआख्यानां गुणानां साम्यावस्था प्रकृतिरुच्यते । प्रकरोति कार्यं जनयतीति प्रकृतिः । सा च प्रकृतिरेव न कस्यचिदपि विकृतिः । अतो मूलप्रकृतिरित्युच्यते । तस्याः सकाशान्महदहंकारौ शब्दतन्मात्रं स्पर्शतन्मात्रं रूपतन्मात्रं रसतन्मात्रं गन्धतन्मात्रं चेति महदादीनि सप्त तत्त्वानि क्रमेण समुत्पद्यन्ते । तत्रान्तःकरणापरपर्यायं महत्तत्त्वमहंकारस्य प्रकृतिर्मूलप्रकृतेस्तु विकृतिः । एवमभिमानापरनामधेयमहंकारतत्त्वं महत्तत्त्वस्य विकृतिः । तदेवाहंकारतत्त्वं तामसं सत्पञ्चतन्मात्राणां, तदेव सात्त्विकं सज्ज्ञानेन्द्रियाणां चक्षुःश्रोत्रघ्राणरसनात्वगाख्यानां, कर्मेन्द्रियाणां वाक्पाणिपादपायूपस्थाख्यानां संकल्पविकल्पैतदुभयात्मकस्य मनसश्च प्रकृतिः । अयं भावः— महत्तत्त्वाज्जायमानोऽहंकारस्त्रिविधः—सात्त्विको राजसस्तामसश्चेति । सात्त्विको वैकारिक इति व्यवह्रियते । राजसस्तैजस इत्यभिधीयते । तामसश्च भूतादिरित्युच्यते । तत्र तामसादहंकारात्पूर्वोत्तरक्रमेण शब्दतन्मात्रादिपञ्चकं समुत्पद्यते । एवं च पूर्वस्योत्तरं विकृतिरुत्तरस्य च पूर्वं प्रकृतिरित्युभयात्मकानि महदादीनि सप्त तत्त्वानीत्यर्थः। शब्दस्पर्शरूपरसगन्धाख्यानां गुणानां विशेषरहितानामाश्रयभूतानि सूक्ष्माणि पञ्च भूतानि तन्मात्रशब्देनोच्यन्ते । तन्मात्रपञ्चकात्प्रत्येकस्मात्पूर्वोपस्कृताच्छब्दतन्मात्रादाकाशः स्पर्शतन्मात्राद्वायुरित्येवं क्रमेण वियदादीनि पञ्च महाभूतानि जायन्ते । अत एव च तामसोऽहंकारो भूतादिरिति भण्यते । नैतेभ्यः किंचित्तत्त्वान्तरं समुत्पद्यत इतीमानि पञ्च महाभूतानि विकृत्यात्मकान्येव । तथा सात्त्विकादहंकारात्पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि तदुभयप्रेरकं मनश्चेत्येकादशेन्द्रियगणः प्रादुर्भवति । अयमिन्द्रियगणोऽपि केवलं विकृत्यात्मक एव । अत एवैतदुपादानभूतः सात्त्विकोऽहंकारो वैकारिक इति निर्दिश्यते । पुरुषस्तु न कस्यचित्प्रकृतिर्नापि वा विकृतिरित्यनुभयात्मकः । एवं च प्रकृतिः प्रकृत्यात्मिकैका । उभयात्मकानि महदादीनि सप्त । पञ्च महाभूतानि एकादशेन्द्रियाणि च केवलविकृत्यात्मकानीति । अनुभयात्मकः पुरुषश्चैक इति मिलित्वा पञ्चविंशतिस्तत्त्वानि ।

तदुक्तं सांख्यकारिकायाम्——

> मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
> षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥ इति ।

इमानि च तत्त्वानि मोक्षसाधनीभूतप्रकृतिपुरुषविवेकज्ञाने हेयतयोपयुक्तानीति सांख्यानामभिप्रायः । अन्यश्च विस्तरः पुरुषस्त्वकर्ता भोक्ता नित्यचिद्रूपः प्रकृतिरूपासंबन्धः प्रकृतेर्निवृत्तिश्चेत्यादिस्तत एवावगन्तव्य इति ।

पतञ्जलिप्रभृतिमुनिमतमनुवर्तमानानां दर्शनं पातञ्जलदर्शनम् । एतन्मते चितिशक्तेर्निरुपाधिकस्वरूपेणावस्थानं मोक्षः । तत्र साधनतया यमनियमासनप्राणायामप्रत्याहारध्यानधारणासमाधीत्येतदष्टाङ्गनिर्वचनपुरःसरं प्रमाणविपर्ययादिचित्तवृत्तिनिरोधाख्यो योगः सविस्तरं प्रतिपादितः । तत्र योगे प्रत्याहारपर्यन्तानि पञ्च बहिरङ्गाणि साधनानि । ततः पराणि त्रीणि संयमपदवाच्यान्यन्तरङ्गसाधनानीति विवेक्तव्यमिति ।

अधुना सर्वदर्शनमूर्धन्यभूतं शांकरदर्शनं संक्षेपतः किंचिन्निरूप्यते । सांख्यदर्शने मुख्यतः प्रकृतिपुरुषरूपं तत्त्वद्वयं प्रतिपादितम् । तत्र प्रकृतिरपि नित्या । सैव प्रधानशब्देनोच्यते । तच्च प्रधानं जडमपि घटस्य मृदिव महदादेः कारणमित्युक्तम् । तथा कैरपि सांख्यैर्जीवातिरिक्तः परमेश्वरः स्वीकृतः । स एव ब्रह्मात्मेत्यादिशब्दैर्व्यवह्रियते । ततश्च जडजीवभेदो जीवेश्वरभेदः परिणामवादश्च स्वीकृतः । स च भेदः सत्य इति स्पष्टमेव प्रतीयेत । तदेतत्सर्वं श्रीशंकराचार्याणामसंमतम् । यतः श्रुतौ—

सजातीयं न मे किंचिद्विजातीयं न मे भवेत् ।
स्वगतं च न मे किंचिन्न मे भेदत्रयं भवेत् ॥

इति ब्रह्मणि सजातीयाद्विजातीयात्स्वगताच्च भेदः प्रतिषिध्यते । यदि च सांख्यमतानुसारेण भेदो वास्तविकः स्यात्तर्हि चेतनत्वेन सजातीयाज्जीवादचेतनत्वेन विजातीयाज्जडाद्रामानुजमते ब्रह्मणः सगुणत्वेन स्वगताद्गुणाच्च ब्रह्मणि भेदस्य दुर्वारतया भेदत्रयनिषेधप्रतिपादिका श्रुतिः पीडयेत । जीवब्रह्मणोर्वास्तविकत्वेनैकविज्ञानेन सर्वविज्ञानप्रतिज्ञाऽपि न संगच्छेत । नेह नानाऽस्ति, नेति नेति इत्याद्याः श्रुतयोऽप्यमुमेवाभेदं प्रशंसन्ति । सर्वं खल्विदं ब्रह्म, ऐतदात्म्यमिदꣳ सर्वम्, एवमादिश्रुतयश्च तं द्रढयन्ति । ततश्च भेदत्रयनिषेधान्यथानुपपत्त्या परिदृश्यमानस्य सचराचरस्य सचेतनाचेतनस्य सर्वस्य जगतः प्रातिभासिकत्वकल्पनं विना गत्यभावात्तदुपपादकमनादिभावरूपाज्ञानं परिकल्पनीयम् । यथैव हि रज्ज्वां तिमिरादिदोषवशात्सर्पभूदलनाम्बुधाराः परिकल्प्यन्त एवं चिन्मात्रवपुषि परे ब्रह्मणि परिकल्पितमिदमनेकभेदभिन्नं सकलं जगन्मिथ्याभूतम् । यथावस्थितब्रह्मस्वरूपावबोधबाध्यं च । मिथ्यात्वं नाम प्रतीयमानत्वपूर्वकयथावस्थितवस्तुज्ञाननिवर्त्यत्वम् । यथा भ्रमाधिष्ठानभूतरज्जुतत्त्वज्ञाने प्रतीयमानसर्पादेर्निवृत्तिः । दोषश्चात्र स्वरूपतिरोधानविविधविचित्रविक्षेपकरं सदसद्भ्यामनिर्वचनीयमनाद्यविद्यापरपर्यायं भावरूपाज्ञानमेव । इदमेव सर्वस्य जगतो मूलकारणमिति मूलाज्ञानमित्युच्यते । तच्च त्रिगुणात्मकमपि न सांख्यसंमतप्रधानवन्नित्यम् । मोक्षावस्थायां तस्य विनाशावश्यंभावात् । अतो न कथमपि द्वैतप्रसङ्गः ।

एतादृशाज्ञानकल्पने प्रमाणं देवात्मशक्तिं स्वगुणैर्निगूढाम्, भूयश्चान्ते विश्वमायानिवृत्तिः, पराऽस्य शक्तिर्विविधैव श्रूयत इत्याद्याः श्रुतयः। अत्र स्वगुणैर्निगूढां मायानिवृत्तिः पराऽस्य शक्तिर्विविधैवेत्यादिपदैः पूर्वोक्तविशेषणविशिष्टस्य तादृशाज्ञानस्य स्पष्टमेवोपढौकितत्वात्। किंचोक्ताज्ञाने तत्त्वमसीति जीवब्रह्मैक्यप्रतिपादकश्रुतिरपि प्रमाणम्। यदि च जीवब्रह्मणोर्भेदस्तात्त्विकः स्यात्तदा तयोस्तादात्म्यं कुशाग्रधिषणेन सुरगुरुणाऽपि सुदुर्वचमित्यतस्तादृशाज्ञानकल्पनमनिच्छद्भिस्तत्रभवद्भिर्भवद्भिः सर्वैरप्यगत्या स्वीकार्यम्। तेन चाज्ञानेनायं जीवजडादिः सकलः प्रपञ्चः परमात्मनि प्रकल्पित इति मिथ्यैवेति चैकमेव तत्त्वं परमार्थतः। ततश्च परमात्मन्येवेदं सकलं भासत इत्ययं विवर्तवादः। न तु परिणामवादो नापि रामानुजीयाभीष्टा सत्ख्यातिः किंत्वनिर्वचनीयख्यातिः। अनिर्वचनीयत्वं नाम कार्यस्य सत्त्वेनासत्त्वेन च निर्वक्तुमशक्यस्य ख्यातिः प्रतीतिः। यथा शुक्तिकायां भासमानं रजतम्। तद्धि न सत्यम्। नेदं रजतमिति बाधानुपपत्तेः। नाप्यसत्यम्। संप्रतीदं रजतमिति प्रतीत्यनुपपत्तेः। तदुक्तम्—

सत्त्वे न भ्रान्तिबाधौ स्तो नासत्त्वे ख्यातिबाधने।
सदसद्भ्यामनिर्वाच्याऽविद्याऽऽविद्यैः सह भ्रमः॥ इति।

प्रपञ्चस्याप्यनादिभावरूपाज्ञानमूलकत्वादनिर्वचनीयत्वमेव। तथा हि—प्रतीयमानं सर्वं जगन्न सत्। ज्ञानिदृष्ट्या बाधानुपपत्तेः। नाप्यसत्। ज्ञानावस्थातः प्राक्कालेऽस्मदादीनामपि प्रतीत्यनुपपत्तेः। अतः सतः ख्यातिर्दुर्वचा। एतत्सर्वमनुसंधायैव माण्डूक्योपनिषद्युक्तम्—

मायामात्रमिदं द्वैतमद्वैतं परमार्थतः। इति।

एतन्मते मूलाज्ञाननिवृत्तौ स्वस्वरूपाधिगमो मोक्षः। एवं चानवरततन्त्रप्रमामानादिभावरूपाज्ञानकृतं सर्वं संसृतिचक्रं तस्मिन्परस्मिन्नेव कल्पितं मिथ्याभूतम्। रज्जौ भुजंगवत्। निरस्तसमस्तदोषनिर्धूताखिलविशेषैकरसकूटस्थशुद्धबुद्धमुक्तनित्यज्ञानानन्दस्वयंज्योतीरूपं चिन्मात्रमेकमेव ब्रह्मतत्त्वमित्यद्वैतप्रतिपादकं शांकरदर्शनमेव विजयतेतराम्।

एवं यथाबुद्धिबलं सर्वदर्शनस्वरूपं संक्षेपतो निरूप्य श्रीमत्सच्चिदानन्दचरणकमलयोः समर्पयति—

पुण्यपत्तने
शके १८४९ फा. शु. ११ भृगुवासरे.

माङ्लकरोपाख्यः शंकरशास्त्री-
भारद्वाजः।

———

ॐ तत्सद्ब्रह्मणे नमः ।

# सर्वदर्शनसंग्रहः ।

## तत्र चार्वाकदर्शनम् ॥ १ ॥

नित्यज्ञानाश्रयं वन्दे निःश्रेयसनिधिं शिवम् ।
येनैव जातं मह्यादि[1] तेनैवेदं सकर्तृकम् ॥ १ ॥

पारं गतं सकलदर्शनसागराणा-
मात्मोचितार्थचरितार्थितसर्वलोकम्[2] ।
श्रीशार्ङ्गपाणितनयं निखिलागमज्ञं
सर्वज्ञविष्णुगुरुमन्वहमाश्रयेऽहम् ॥ २ ॥

श्रीमत्सायणदुग्धाब्धिकौस्तुभेन महौजसा ।
क्रियते माधवार्येण सर्वदर्शनसंग्रहः ॥ ३ ॥

पूर्वेषामतिदुस्तराणि सुतरामालोड्य शास्त्राण्यसौ
श्रीमत्सायणमाधवः प्रभुरुपन्यास्यत्सतां प्रीतये ।
दूरोत्सारितमत्सरेण मनसा शृण्वन्तु तत्सज्जना
माल्यं कस्य विचित्रपुष्परचितं प्रीत्यै न संजायते ॥ ४ ॥

अथ कथं परमेश्वरस्य निःश्रेयसप्रदत्वमभिधीयते । बृहस्पतिमतानुसारिणा नास्तिकशिरोमणिना चार्वाकेण[3] तस्य दूरोत्सारितत्वात् । दुरुच्छेदं हि चार्वाकस्य चेष्टितम् । प्रायेण सर्वप्राणिनस्तावत्—

यावज्जीवं सुखं जीवेन्नास्ति मृत्योरगोचरः ।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः ॥

इति लोकगाथामनुरुन्धाना नीतिकामशास्त्रानुसारेणार्थकामावेव पुरुषार्थौ मन्यमानाः पारलौकिकमर्थमपह्नुवानाश्चार्वाकमतमनुवर्तमाना एवानुभूयन्ते । अत एव तस्य चार्वाकमतस्य लोकायतमित्यन्वर्थमपरं नामधेयम् ।

तत्र पृथिव्यादीनि भूतानि चत्वारि तत्त्वानि[4] । तेभ्य एव देहाकारपरिणतेभ्यः किण्वादिभ्यो मदशक्तिवच्चैतन्यमुपजायते । तेषु विनष्टेषु सत्सु स्वयं विनश्यति । तदाहुः—विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविन-

---

१ च. °वि कार्यजातं स° । २ मुद्रितपुस्तके—आत्मोचिताचरितमर्थितसर्वलोकमिति । ३ च. °णिचा । ४ ख.—ङ. °ण दू° । ५ च. °न नुः का° । ६ च. अत्र । ७ च. °नि दे° । ८ च. °तेभ्यस्तेभ्यः । ९ क.—ङ. विश्वं । १० क.—ङ. तदिह । ११ क.—ङ. नमेवे° ।

श्यति न प्रेत्य संज्ञाऽस्ति [ बृ० २ । ४ । १२ ] इति । तच्चैतन्यविशिष्टदेह एवाऽऽत्मा । देहातिरिक्त आत्मनि प्रमाणाभावात् । प्रत्यक्षैकप्रमाणवादितयाऽनुमानादेरनङ्गीकारेण प्रामाण्याभावात् । अङ्गनाद्यालिङ्गनादिजन्यं सुखमेव पुरुषार्थः । न चास्य दुःखसंभिन्नतया पुरुषार्थत्वमेव नास्तीति मन्तव्यम् । अवर्जनीयतया प्राप्तस्य दुःखस्य परिहारेण सुखमात्रस्यैव भोक्तव्यत्वात् । तद्यथा मत्स्यार्थी सशल्कान्सकण्टकान्मत्स्यानुपादत्ते स यावदादेयं तावदादाय निवर्तते । यथा वा धान्यार्थी सपलालानि धान्यान्याहरति स यावदादेयं तावदादाय निवर्तते । तस्माद्दुःखभयान्नानुकूलवेदनीयं सुखं त्यक्तुमुचितम् । न हि मृगाः सन्तीति शालयो नोप्यन्ते । न हि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते । यदि कश्चिद्भीरुर्दृष्टं सुखं त्यजेत्तर्हि स पशुवन्मूर्खो भवेत् । तदुक्तम्—

त्याज्यं सुखं विषयसंगमजन्म पुंसां
दुःखोपसृष्टमिति मूर्खविचारणैषा ।
व्रीहीञ्जिहासति सितोत्तमतण्डुलाढ्यान्
को नाम भोस्तुषकणोपहितान्हितार्थी ॥ इति ।

ननु पारलौकिकसुखाभावे बहुवित्तव्ययशरीरायाससाध्येऽग्निहोत्रादौ विद्यावृद्धाः कथं प्रवर्तिष्यन्त इति चेत्तदपि न प्रमाणकोटिं प्रवेष्टुमीष्टे । अनृतव्याघातपुनरुक्तदोषैर्दूषिततया वैदिकंमन्यैरेव धूर्तबकैः परस्परं कर्मकाण्डप्रामाण्यवादिभिर्ज्ञानकाण्डस्य ज्ञानकाण्डप्रामाण्यवादिभिः कर्मकाण्डस्य च प्रतिक्षिप्तत्वेन त्रय्या धूर्तप्रलापमात्रत्वेनाग्निहोत्रादेर्जीविकामात्रप्रयोजनत्वात् । तथा चाऽऽभाणकः—

अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम् ।
बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः ॥ इति ।

अत एव कण्टकादिजन्यं दुःखमेव नरकः । लोकसिद्धो राजा परमेश्वरः । देहोच्छेदो मोक्षः । देहात्मवादे च स्थूलोऽहं कृशोऽहं कृष्णोऽहमित्यादिसामानाधिकरण्योपपत्तिः । मम शरीरमिति व्यवहारो राहोः शिर इत्यादिवदौपचारिकः । तदेतत्सर्वं समग्राहि—

१ क.–ङ. °नालि° । २ च. °दिजनितं सु° । ३ च. °न्ते । भीरु° । ४ च. °र्थां त्रैवि° । ५ च. प्रवर्तन्त । ६ च. °ष्टे । व्या° । ७ च. °र्तवादमा° । ८ क.–ङ. च कृ° । ९ च. °शोऽह° ।

अङ्गनालिङ्गनाज्जन्यसुखमेव पुमर्थता ।
कण्टकादिव्यथाजन्यं दुःखं निरय उच्यते ॥
लोकसिद्धो भवेद्राजा परेशो नापरः स्मृतः ।
देहस्य नाशो मुक्तिस्तु न ज्ञानान्मुक्तिरिष्यते ॥
अत्र चत्वारि भूतानि भूमिवार्यनलानिलाः ।
चतुर्भ्यः खलु भूतेभ्यश्चैतन्यमुपजायते ॥
किण्वादिभ्यः समेतेभ्यो द्रव्येभ्यो मदशक्तिवत् ।
अहं स्थूलः कृशोऽस्मीति सामानाधिकरण्यतः ॥
देहः स्थौल्यादियोगाच्च स एवाऽऽत्मा न चापरः ।
मम देहोऽयमित्युक्तिः संभवेदौपचारिकी ॥ इति ।

स्यादेतत्[1] । स्यादेष मनोरथो यद्यनुमानादेः प्रामाण्यं न स्यात् । अस्ति च प्रामाण्यम् । कथमन्यथा धूमोपलम्भानन्तरं धूमध्वजे प्रेक्षावतां प्रवृत्तिरुपपद्येत । नद्यास्तीरे फलानि सन्तीति वचनश्रवणसमनन्तरं फलार्थिनां नदीतीरे प्रवृत्तिरिति । तदेतन्मनोराज्यविजृम्भणम् । व्याप्तिपक्षधर्मताशालि हि[2] लिङ्गं गमकमभ्युपगतमनुमानप्रामाण्यवादिभिः । व्याप्तिश्चोभयविधोपाधिविधुरः संबन्धः । स च सत्तया चक्षुरादिवन्नाङ्गभावं भजते । किंतु ज्ञाततया । कः खलु ज्ञानोपायो भवेत् । न तावत्प्रत्यक्षम् । तच्च[3] बाह्यमान्तरं वाऽभिमतम् । न प्रथमः । तस्य संप्रयुक्तविषयज्ञानजनकत्वेन भवति प्रसरसंभवेऽपि भूतभविष्यतोस्तदसंभवेन सर्वोपसंहारवत्या व्याप्तेर्दुर्ज्ञानत्वात् । न च व्याप्तिज्ञानं सामान्यगोचरमिति मन्तव्यम् । व्यक्त्योरविनाभावाभावप्रसङ्गात् । नापि चरमः । अन्तःकरणस्य बहिरिन्द्रियतन्त्रत्वेन बाह्येऽर्थे स्वातन्त्र्येण[4] प्रवृत्त्यनुपपत्तेः । तदुक्तम्—

चक्षुराद्युक्तविषयं परतन्त्रं बहिर्मनः ( त० वि० २० ) । इति ।

नाप्यनुमानं व्याप्तिज्ञानोपायः[5] । तत्र तत्राप्येवमित्यनवस्थादौःस्थ्यप्रसङ्गात् । नापि शब्दस्तदुपायः । काणादमतानुसारेणानुमान एवान्तर्भावात् । अनन्तर्भावे वा वृद्धव्यवहाररूपलिङ्गावगतिसापेक्षतया प्रागुक्तदूषणलङ्घनाजङ्घालत्वात् । धूमधूमध्वजयोरविनाभावोऽस्तीति वचनमात्रे मन्वादिवद्विश्वासाभावाच्च । अनुप-

---

१ च. °तदे° । २ च. हि विभागं गमकमङ्गीकृत° । ३ क. च. तत्र । ४ क. °भाव° । ५ च. °यपरत° । ६ च. °ण प्रवृत्तेरप्रवृत्तेः । त° । ७ च. °पायम् । ८ च. °यः कणा° । ९ च. °नसंगतिम° ।

दृष्टाविनाभावस्य पुरुषस्यार्थान्तरदर्शनेनार्थान्तरानुमित्यभावे स्वार्थानुमानकथायाः कथाशेषत्वप्रसङ्गाच्च । कैव कथा परार्थानुमानस्य । उपमानादिकं तु दूरापास्तम् । तेषां संज्ञासंज्ञिसंबन्धादिबोधकत्वेनानौपाधिकसंबन्धबोधकत्वासंभवात् ।

किंच—उपाध्यभावोऽपि दुरवगमः । उपाधीनां प्रत्यक्षत्वनियमासंभवेन प्रत्यक्षाणामभावस्य प्रत्यक्षत्वेऽप्यप्रत्यक्षाणामभावस्याप्रत्यक्षतयाऽनुमानाद्यपेक्षायामुक्तदूषणानतिवृत्तेः । अपि च साधनाव्यापकत्वे सति साध्यसमव्याप्तिरिति तल्लक्षणं कक्षीकर्तव्यम् । तदुक्तम्—

अव्याप्तसाधनो यः साध्यसमव्याप्तिरुच्यते स उपाधिः ।
शब्देऽनित्ये साध्ये सकर्तृकत्वं घटत्वमश्रवणता च ॥
व्यावर्तयितुमुपात्तान्यत्र क्रमतो विशेषणानि त्रीणि ।
तस्मादिदमनवद्यं समासमेत्यादिनोक्तमाचार्यैश्च ॥ इति । *

तत्र विध्यध्यवसायपूर्वकत्वान्निषेधाध्यवसायस्योपाधिज्ञाने जाते तदभावविशिष्टसंबन्धरूपं व्याप्तिज्ञानं व्याप्तिज्ञानाधीनं चोपाधिज्ञानमिति परस्पराश्रयवज्रप्रहारदोषो वज्रलेपायते । तस्मादविनाभावस्य दुर्बोधतया नानुमानाद्यवकाशः । धूमादिज्ञानानन्तरमग्न्यादिज्ञाने प्रवृत्तिः प्रत्यक्षमूलतया भ्रान्त्या वा युज्यते । क्वचित्फलप्रतिलम्भस्तु मणिमन्त्रौषधादिवद्यादृच्छिकः । अतस्तत्साध्यमदृष्टादिकमपि नास्ति । नन्वदृष्टानिष्टौ जगद्वैचित्र्यमाकस्मिकं स्यादिति चेन्न तद्भद्रम् । स्वभावादेव तदुपपत्तेः । तदुक्तम्—

अग्निरुष्णो जलं शीतं समस्पर्शस्तथाऽनिलः ।
केनेदं चित्रितं तस्मात्स्वभावात्तद्व्यवस्थितिः ॥ इति ।

तदेतत्सर्वं बृहस्पतिनाऽप्युक्तम्—

न स्वर्गो नापवर्गो वा नैवाऽऽत्मा पारलौकिकः ।
नैव वर्णाश्रमादीनां क्रियाश्च फलदायिकाः ॥

---

* समासमाविनाभावावत्र स्तो यदा तदा ।
समेन यदि नो व्याप्तस्तयोर्हीनोऽप्रयोजकः ॥ इति घ. ङ. पुस्तकटिप्पण्याम् ।

---

१ क.–ङ. °च्च । उ° । २ च °उपाध्यभा° । ३ च °रवग° । ४ क. °वेनाप्र° । ५ क. °वस्याप्रत्यक्षतयाऽनु° । ६ च °मु । अ° । ७ क.–ङ. °पाधिरिति त° । ८ क.–ङ. °नित्यत्वे सा° । ९ च. °तां व्या° । १० च. °त्र व्यत्र° । ११ च. विध्यव° । १२ च. °रूपमज्ञा° । १३ च. °ज्ञपातस्ते । त° । १४ च. °धधवया° । १५ च. °ज्ञानकृनीकारे ज° । १६ क.–ङ. चेत्तन्न । १७ क.–घ °तं शीतस्प° । १८ च. र्गो वाऽपि नैवाऽऽत्मा वा पा° ।

अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम् ।
बुद्धिपौरुषहीनानां जीविका धातृनिर्मिता ॥
पशुश्चेन्निहतः स्वर्गं ज्योतिष्टोमे गमिष्यति ।
स्वपिता यजमानेन तत्र कस्मान्न हिंस्यते ॥
मृतानामपि जन्तूनां श्राद्धं चेत्तृप्तिकारणम् ।
निर्वाणस्य प्रदीपस्य स्नेहः संवर्धयेच्छिखाम् ॥
गच्छतामिह जन्तूनां व्यर्थं पाथेयकल्पनम् ।
गेहस्थकृतश्राद्धेन पथि तृप्तिरवारिता ॥
स्वर्गस्थिता यदा तृप्तिं गच्छेयुस्तत्र दानतः ।
प्रासादस्योपरिस्थानामत्र कस्मान्न दीयते ॥
यावज्जीवेत्सुखं जीवेदृणं कृत्वा घृतं पिबेत् ।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः ॥
यदि गच्छेत्परं लोकं देहादेष विनिर्गतः ।
कस्माद्भूयो न चाऽऽयाति बन्धुस्नेहसमाकुलः ॥
ततश्च जीवनोपायो ब्राह्मणैर्विहितस्त्विह ।
मृतानां प्रेतकार्याणि न त्वन्यद्विद्यते क्वचित् ॥
त्रयो वेदस्य कर्तारो[1] भण्डधूर्तनिशाचराः ।
जर्फरीतुर्फरीत्यादि पण्डितानां वचः स्मृतम् ॥
अश्वस्यात्र[2] हि शिश्नं तु पत्नीग्राह्यं प्रकीर्तितम् ।
भण्डैस्तद्वत्परं चैव ग्राह्यजातं प्रकीर्तितम् ॥
मांसानां खादनं तद्वन्निशाचरसमीरितम् ॥ इति ।

तस्माद्बहूनां प्राणिनामनुग्रहार्थं चार्वाकमतमाश्रयणीयमिति रमणीयम् ॥

इति श्रीमत्सायणमाधवीये सर्वदर्शनसंग्रहे चार्वाकदर्शनम् ॥ १ ॥

## अथ बौद्धदर्शनम् ॥ २ ॥

अत्र बौद्धैरभिधीयते । यदभ्यधायि—अविनाभावो दुर्बोध इति तदसाधीयः । तादात्म्यतदुत्पत्तिभ्यामविनाभावस्य सुज्ञानत्वात् । तदुक्तम्—

कार्यकारणभावाद्वा स्वभावाद्वा नियामकात् ।
अविनाभावनियमोऽदर्शनान्न न दर्शनात्[3] ( न्या. बि. ) ॥ इति ।

---

१ ख. °रो मुनिभण्डनि° । २ च. अत्र । ३ क. ग. °दर्शनात्तददर्शना° । ख. दर्शनाभावान्तरदर्शनात् । ङ. च. दर्शनान्तरदर्शनात् ।

अन्वयव्यतिरेकावविनाभावनिश्चायकाविति पक्षे साध्यसाधनयोरव्यभिचारो दुरवधारणो भवेत्। भूते भविष्यति वर्तमाने चानुपलभ्यमानेऽर्थे व्यभिचारशङ्काया अनिवारणात्। ननु तथाविधस्थले तावकेऽपि मते व्यभिचारशङ्का दुष्परिहरेति चेन्मैवं वोचः। विनाऽपि कारणं कार्यमुत्पद्यतामित्येवंविधायाः शङ्काया व्याघातावधिकतया निवृत्तत्वात्। तदेव ह्याशङ्क्यते यस्मिन्नाशङ्क्यमाने व्याघातादयो नावतरेयुः। तदुक्तम्—व्याघातावधिराशङ्का (न्या. कु. ३ । ७) इति। तस्मात्तदुत्पत्तिनिश्चयेनाविनाभावो निश्चीयते। तदुत्पत्तिनिश्चयश्च कार्यहेत्वोः प्रत्यक्षोपलम्भानुपलम्भपञ्चकनिबन्धनः। कार्यस्योत्पत्तेः प्रागनुपलम्भः कारणोपलम्भे सत्युपलब्धस्य पश्चात्कारणानुपलम्भादनुपलम्भ इति पञ्चकारण्या धूमधूमध्वजयोः कार्यकारणभावो निश्चीयते। तथा तादात्म्यनिश्चयेनाप्यविनाभावो निश्चीयते। यदि शिंशपा वृक्षत्वमतिपतेत्स्वात्मानमेव जह्यादिति विपक्षे बाधकप्रवृत्तेः। अप्रवृत्ते तु बाधके भूयः सहभावोपलम्भेऽपि व्यभिचारशङ्कायाः को निवारयिता। शिंशपावृक्षयोश्च तादात्म्यनिश्चयो वृक्षोऽयं शिंशपेति सामानाधिकरण्यबलादुपपद्यते। न ह्यत्यन्तभेदे तत्संभवति। पर्यायत्वेन युगपत्प्रयोगायोगात्। नाप्यत्यन्तभेदे। गवाश्वयोरनुपलम्भात्। तस्मात्कार्यात्मानौ कारणात्मानावनुमापयत इति सिद्धम्।

यदि कश्चित्प्रामाण्यमनुमानस्य नाङ्गी कुर्यात्तं प्रति ब्रूयात्। अनुमानं प्रमाणं न भवतीत्येतावन्मात्रमुच्यते तत्र न किंचन साधनमुपन्यस्येत उपन्यस्यते वा। न प्रथमः। अशिरस्कवचनस्योपन्यासे साध्यासिद्धेः।

एकाकिनी प्रतिज्ञा हि प्रतिज्ञातं न साधयेत्।

इति न्यायात्। नापि चरमः। अनुमानं प्रमाणं न भवतीति ब्रुवाणेन वचनप्रमाणमनभ्युपगच्छता त्वया स्वपरकीयशास्त्रे प्रामाण्येनोपगृहीतस्य वचनस्योपन्यासे मम माता वन्ध्येतिवद्व्याघातापातात्। किंच प्रमाणतदाभासव्यवस्थापनं तत्समानजातीयत्वादिति वदता भवतैव स्वीकृतं स्वभावानुमानम्। पर-

१ ख. °नियामका°। २ च. घ. °ति ननु प°। ३ क. °नेऽपि व्य°। ग. °ने व्य°। घ.—च. °ने च व्य°। ४ क. °रिहारे°। ५ च. °हरैवेति। ६ च. °वम। त्रि°। ७ च. °न्वनस्तादात्म्यानिश्चयोऽनाविनाभावो निश्चीयते ता°। ८ °यास्तादा°। ९ च. °।। यहमा°। १० घ. च. °रणमात्मानमनु°। ख. °रणावनु°। ११ ख.—च. °स्यते वा। १२ क. °न त्वया पारस्करवचस्यो°। ख. °न त्वया स्ववचनस्यो° इति पाठः ख. पुस्तकस्य समासे वर्तते। ग. °न त्वाच्छिरस्कव°। ङ. च. °न त्वयाऽशिरस्कवचनस्यो°। १३ घ. °तं प्रमाणाभासानु°।

शब्दो मङ्गलार्थोऽधिकारानन्तर्यार्थश्च स्वी क्रियते । अतःशब्दो हेत्वर्थः। तदुक्तं गारुडे—

अथातःशब्दपूर्वाणि सूत्राणि निखिलान्यपि ।
प्रारभ्यन्ते नियत्यैव तत्किमत्र नियामकम् ॥
कश्चार्थस्तु तयोर्विद्वन्कथमुत्तमता तयोः ।
एतदाख्याहि मे ब्रह्मन्यथा ज्ञास्यामि तत्त्वतः ॥
एवमुक्तो नारदेन ब्रह्मा प्रोवाच सत्तमः ।
आनन्तर्याधिकारे च मङ्गलार्थे तथैव च ॥
अथशब्दस्त्वतःशब्दो हेत्वर्थे समुदीरितः ॥ इति ।

यतो नारायणप्रसादमन्तरेण न मोक्षो लभ्यते प्रसादश्च [न] ज्ञानमन्तरेणातो ब्रह्मजिज्ञासा कर्तव्येति सिद्धम् ।

जिज्ञास्यब्रह्मणो लक्षणमुक्तम्—जन्माद्यस्य यतः ( ब्र० सू० १ । १ । २ ) इति । सृष्टिस्थित्यादि यतो भवति तद्ब्रह्मेति वाक्यार्थः । तथा च स्कान्दं वचः—

उत्पत्तिस्थितिसंहारा नियतिर्ज्ञानमावृतिः ।
बन्धमोक्षौ च पुरुषाद्यस्मात्स हरिरेकराट् ॥ इति ।

यतो वा इमानीत्यादिश्रुतिभ्यश्च ।

तत्र प्रमाणमप्युक्तम्—शास्त्रयोनित्वात् ( ब्र० सू० १ । १ । ३ ) इति । नावेदविन्मनुते तं बृहन्तम् ( तै० ब्रा० ३ । १२ । ९ । ७ ) तं त्वौपनिषदम् ( बृ० ३ । ९ । २६ ) इत्यादिश्रुतिभ्यस्तस्याऽऽनुमानिकत्वं निराक्रियते। न चानुमानस्य स्वातन्त्र्येण प्रामाण्यस्ति । तदुक्तं कौर्मे—

श्रुतिसाहाय्यरहितमनुमानं न कुत्रचित् ।
निश्चयात्साधयेदर्थं प्रमाणान्तरमेव च ॥
श्रुतिस्मृतिसहायं यत्प्रमाणान्तरमुत्तमम् ।
प्रमाणपदवीं गच्छेन्नात्र कार्या विचारणा ॥ इति ।

शास्त्रस्वरूपमुक्तं स्कान्दे—

ऋग्यजुः सामाथर्वा च भारतं पाञ्चरात्रकम् ।
मूलरामायणं चैव शास्त्रमित्यभिधीयते ॥
यच्चानुकूलमेतस्य तच्च शास्त्रं प्रकीर्तितम् ।
अतोऽन्यो ग्रन्थविस्तारो नैव शास्त्रं कुवर्त्म तत् ॥ इति ।

---

१ क.–ग. ङ. च. °रभेत । २ क.–ग. ङ. च. °विद्वान्क° । ३ च. °त्तरता ।

तदनेनानन्यलभ्यः शास्त्रार्थ इति न्यायेन भेदस्य प्राप्तत्वेन तत्र न तात्पर्यं किंत्वद्वैत एव वेदवाक्यानां तात्पर्यमित्यद्वैतवादिनां प्रत्याशा प्रतिक्षिप्ता । अनुमानादीश्वरस्य सिद्ध्यभावेन तद्भेदस्यापि ततः सिद्ध्यभावात् । तस्मान्न भेदानुवादकत्वमिति*तत्परत्वमवगम्यते । अत एवोक्तम्——

तदागमैकविज्ञेयं समतीतक्षराक्षरम् ।
नारायणं सदा वन्दे निर्दोषाशेषसद्गुणम् ॥ (वि० त० १) इति ।

शास्त्रस्य तत्र प्रामाण्यमुपपादितम्—तत्तु समन्वयात् (ब्र० सू० १।१।४) इति । समन्वय उपक्रमादिलिङ्गम् । तदुक्तं बृहत्संहितायाम——

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥ इति ।

एवं वेदान्ततात्पर्यवशात्तदेव ब्रह्म शास्त्रगम्यमित्युक्तं भवति । दिङ्मात्रमत्र प्रादर्शि । शिष्टमानन्दतीर्थभाष्यव्याख्यानादौ द्रष्टव्यम् । ग्रन्थबहुत्वभियोपरम्यते ।

एतच्च रहस्यं पूर्णप्रज्ञेन मध्यमन्दिरेण वायोस्तृतीयावतारंमन्येन निरूपितम्—

प्रथमस्तु हनूमान्स्याद्द्वितीयो भीम एव च ।
पूर्णप्रज्ञस्तृतीयश्च भगवत्कार्यसाधकः ॥ इति ।

एतदेवाभिप्रेत्य तत्र तत्र ग्रन्थसमाप्ताविदं पद्यं लिख्यते——

यस्य त्रीण्युदितानि वेदवचने दिव्यानि रूपाण्यलं
बट् तद्दर्शतमित्थमेव निहितं देवस्य भर्गो महत् ।
वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपु-
र्मध्वो यस्तु तृतीयमेतदमुना ग्रन्थः कृतः केशवे ॥

( म० भा० ता० ३२ । १८१ ) ।

एतत्पद्यार्थस्तु 'बळित्था तद्वपुषे धायि दर्शतं देवस्य भर्गः सहसो यतोऽजनि' ( ऋ० सं० म० १ सू० १४१ ) इत्यादिश्रुतिपर्यालोचनयाऽवगम्यत इति । तस्मात्सर्वस्य शास्त्रस्य विष्णुतत्त्वं सर्वोत्तममित्यत्र तात्पर्यमिति सर्वं निरवद्यम् ।

इति श्रीमत्सायणमाधवीये सर्वदर्शनसंग्रहे पूर्णप्रज्ञदर्शनम् ॥

---

* घ. पु. टि.—शास्त्रस्य ।

---

१ ग. °त्र ता° । २ क.–ङ. °तप्र° । ३ ख. °त्र तद्भेदा° । ४ क. ख. घ. °ध्य° । ५ घ. °न्दिरभट्टपुत्रेण । ६ ख. °स्य मार्गे म° । ग. °स्य गर्भो म° । क. घ.–ङ. °स्य गर्भे मेहः । ७ क.–ङ. वृक्षो । ८ च. केशव । ९ च. °मिति निर्व्यूढम् ।

## अथ नकुलीशपाशुपतदर्शनम् ॥ ६ ॥

तदेतद्वैष्णवमतं[1] दासत्वादिपदवेदनीयं परतन्त्रत्वं[2] दुःखावहत्वान्न[3] दुःखान्तादी-प्सितास्पदमित्यरोचयमानाः[4] पारमैश्वर्यं कामयमानाः[5] पराभिमता[6] मुक्ता न भवन्ति परतन्त्रत्वात्, पारमैश्वर्यरहितत्वादस्मदादिवत्, मुक्तात्मानश्च परमेश्वरगुणसंबन्धिनः पुरुषत्वे सति समस्तदुःखबीजविधुरत्वात्परमेश्वरवत्—इत्याद्यनुमानं प्रमाणं प्रति-पद्यमानाः केचन माहेश्वराः[7] परमपुरुषार्थसाधनं[8] पञ्चार्थप्रपञ्चनपरं पाशुपतशा-स्त्रमाश्रयन्ते ।

तत्रेदमादिसूत्रम्—अथातः पशुपतेः पाशुपतयोगविधिं[9] व्याख्यास्याम इति । अस्यार्थः—अत्राथशब्दः पूर्वप्रकृतापेक्षः । पूर्वप्रकृतश्च गुरुं प्रति शिष्यस्य प्रश्नः । गुरुस्वरूपं[10] गणकारिकायां निरूपितम्—

पञ्चकास्त्वष्ट विज्ञेया गणश्चैकस्त्रिकात्मकः[11] ।
वेत्ता नवगणस्यास्य[12] संस्कर्ता गुरुरुच्यते ॥ इति ।

लाभा मला उपायाश्च देशावस्थाविशुद्धयः ।
दीक्षाकारिबलान्यष्टौ पञ्चकास्त्रीणि वृत्तयः ॥ इति ।

विस्त्रो वृत्तय इति प्रयोक्तव्ये त्रीणि वृत्तय इति च्छान्दसः प्रयोगः । तत्र विधीयमानमुपायफलं लाभः । ज्ञानतपोनित्यत्वस्थितिशुद्धिभेदात्पञ्चविधः[13] । तदाह हरदत्ताचार्यः—

ज्ञानं तपोऽथ नित्यत्वं स्थितिः शुद्धिश्च पञ्चमम् ॥ इति ।[14]

आत्माश्रितो दुष्टभावो मलः । स मिथ्याज्ञानादिभेदात्पञ्चविधः । तदप्याह[15]—

मिथ्याज्ञानमधर्मश्च सक्तिहेतुश्च्युतिस्तथा ।
पशुत्वमूलं पञ्चैते तन्त्रे हेया विविक्तितः ॥ इति ।

साधकस्य[16] शुद्धिहेतुरुपायो वासचर्यादिभेदात्पञ्चविधः । तदप्याह—

वासचर्या जपो ध्यानं सदा रुद्रस्मृतिस्तथा ।

---

१ च. °मतरीत्या दा° । २ ग. °नीयपरतन्त्रं दुः° । ३ क—ङ. °न्त्रदुः । ४ च. °हत्वं न दुःखान्तादिपदास्पदमि° । ५ क ग. घ. °नाः पर° । ६ घ. °भिका मु° । ङ. °भिहता । ७ क. ग. महेश्वराः । ८ क. ग.—च. °धनप° । ९ ङ. °तयाग° । १० ग. °पं गुण° । ११ क.—ङ. °कात्रिरात्म° । १२ ख. °वगुण° । १३ क. ङ.—च. °पोदेवनि° । ग. °पोऽथ नि° । १४ च. °ह—ज्ञानं धर्मश्च नित्यत्वं स्थितिः सिद्धिश्च पञ्चममिति । प° । १५ च. तन्त्रभेदा विवार्जिता इति । १६ च. °धनस्य शुद्धिवृद्धिहे° ।

[1]प्रपत्तिश्चेति लाभानामुपायाः पञ्च निश्चिताः ॥ इति ।

येनार्थानुसंधानपूर्वकं[2] ज्ञानतपोवृद्धी प्राप्नोति स देशो गुरुजनादिः । यदाह—

गुरुर्जनो गुहादेशः श्मशानं रुद्र एव च ॥ इति ।

आ लाभप्राप्तेरे[3]मर्यादावस्थितस्य यदवस्थानं साऽवस्था व्यक्तादिविशेषेण विशिष्टा ।

तदुक्तम्—

व्यक्ताऽव्यक्ता ज[4]या दानं निष्ठा चैव हि[5] पञ्चमम् ॥ इति ।

मिथ्याज्ञानादीनामत्यन्तव्यपोहो विशुद्धिः । सा प्रतियोगिभेदात्पञ्चविधा । तदुक्तम्—

अज्ञानस्याप्य[6]धर्मस्य हानिः सङ्गकरस्य च ।
च्युते[7]र्हानिः पशुत्वस्य शुद्धिः पञ्चविधा स्मृता ॥ इति ।

दीक्षाकारिपञ्चकं चोक्तम्—

द्रव्यं कालः क्रिया मूर्तिर्गुरुश्चैव हि पञ्चमः ॥ इति ।

बलपञ्चकं च—गुरुभक्तिः प्रसादश्च मतेर्द्वन्द्वजयस्तथा ।
धर्मश्चैवाप्रमादश्च बलं पञ्चविधं स्मृतम् ॥ इति ।

पञ्चमललघूकरणा[8]र्थमागमाविरोधिनोऽन्नार्जनोपाया वृत्तयो भैक्ष्योत्सृष्टयथालब्धाभिधा इति । शेषमशेषमाकर एवावगन्तव्यम् ।

अ[9]थातःशब्देन दुःखान्तस्य प्रतिपादनम् । आध्यात्मिकादिदुःख[10]त्रयव्यपोहप्रश्नार्थत्वात्तस्य । पशुशब्देन कार्यस्य । परतन्त्रवचनत्वात्तस्य[11] । पतिशब्देन कारणस्य । ईश्वरः पतिरीशितेति जगत्कारणीभूतेश्वरवचनत्वात्तस्य । योगविधी तु प्रसिद्धौ ।

तत्र दुःखान्तो द्विविधः—अनात्मकः सात्मकश्चेति । तत्रानात्मकः सर्वदुःखानामत्यन्तोच्छेदरूपः । सात्मकस्तु[12] दृक्क्रियाशक्ति[13]लक्षणमैश्वर्यम् । तत्र[14] दृक्शक्तिरेकाऽपि विषयभेदात्पञ्चविधोपचर्यते । दर्शनं श्रवणं मननं विज्ञानं सर्वज्ञत्वं चेति । तत्र सूक्ष्मव्यवहितविप्रकृष्टाशेषचाक्षुषस्पर्शादिविषयं ज्ञानं दर्शनम् । अशेषशब्दविषयं सिद्धिज्ञानं श्रवणम् । समस्तचिन्ताविषयं सिद्धिज्ञानं मननम् । निरवशेषशास्त्रविषयं ग्रन्थतोऽर्थतश्च सिद्धिज्ञानं विज्ञानम् ।

---

१ क.—ग. ङ. च. प्रतिपत्तिश्च ला° । २ च. °नार्थेन साधकः शुद्धिवृ° । ३ क.—ङ. °कतमादौ य° । ४ ङ च. जपादा° । ५ च. तु पञ्चमीति । ६ क.—ङ. °प्यसङ्गस्य । ७ ग. ङ.—च. च्युतिर्हा° । ८ क.—ङ. °णार्थं मानामानत्रि° । ९ क.—ग.—ङ. च. °त्राथश° । १० क.—ङ. °त्वव्य° । ११ च. °स्य तत्र प° । १२ च. °स्तु दुःखक्रि° । १३ ङ. °क्तिक्ष° । च. °क्तिनलक्ष° । १४ घ.—ङ. यत्र ।

स्वशास्त्रं येनोच्यते। उक्तानुक्ताशेषार्थेषु समासविस्तरविभागविशेषतश्च तत्त्व॰ व्याप्तसदोदितातिद्धिशानं सर्वज्ञत्वमित्येषा धीशक्तिः। क्रियाशक्तिरेकाऽपि त्रिवि- धोपचर्यते। *मनोजवित्वं कामरूपित्वं विकरणधर्मित्वं चेति। तत्र निरति- शयशीघ्रकारित्वं मनोजवित्वम्। कर्मादिनिरपेक्षस्य स्वेच्छयैवानन्तसलक्षणवि- लक्षणसरूपकरणाधिष्ठातृत्वं कामरूपित्वम्। उपसंहृतकरणस्यापि निरतिशयै- श्वर्यसंबन्धित्वं विकरणधर्मित्वमित्येषा क्रियाशक्तिः।

अस्वतन्त्रं सर्वं कार्यम्। तत्रिविधं विद्या कला पशुश्चेति। एतेषां ज्ञानात्संशयादिनिवृत्तिः। तत्र पशुगुणो विद्या। साऽपि द्विविधा—बोधाबोधस्वभावभेदात्। बोधस्वभावा विवेकाविवेकप्रवृत्तिभेदाद्द्विविधा। सा चित्तमित्युच्यते। चित्तेन हि सर्वः प्राणी बोधात्मकप्रकाशानुगृहीतं सामान्येन विवेचितमविवेचितं चार्थं चेतयत इति। तत्र विवेकप्रवृत्तिः प्रमाणमात्रव्यङ्ग्या। पश्वर्थधर्माधर्मिका पुनरबोधात्मिका विद्या। चेतनपरतन्त्रत्वे सत्यचेतना कला। साऽपि द्विविधा—कार्याख्या कारणाख्या चेति। तत्र कार्याख्या दशविधा—पृथिव्यादीनि पञ्च तत्त्वानि, रूपादयः पञ्च गुणाश्चेति। कारणाख्या त्रयोदशविधा—ज्ञानेन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकम्, अध्यवसायाभिमानसंकल्पाभिधवृत्तिभेदाद्बुद्ध्यहंकारमनोलक्षणमन्तःकरणत्रयं चेति। पशुत्वसंबन्धी पशुः। सोऽपि द्विविधः—साञ्जनो निरञ्जनश्चेति। तत्र साञ्जनः शरीरेन्द्रियसंबन्धी। निरञ्जनस्तु तद्रहितः। तत्प्रपञ्चस्तु पञ्चार्थभाष्यदीपिकादौ द्रष्टव्यः।

समस्तसृष्टिसंहारानुग्रहकारि कारणम्। तस्यैकस्यापि गुणकर्मभेदापेक्षया विभाग उक्तः पतिः साद्य इत्यादिना। तत्र पतित्वं निरतिशयदृक्क्रियाशक्तिमत्त्वं तेनैश्वर्येण नित्यसंबन्धित्वम्। आद्यत्वमनागन्तुकैश्वर्यसंबन्धित्वमित्यादर्शकारादिभिस्तीर्थकरैर्निरूपितम्।

---

* घ पुस्तके मनोजयित्वमित्यपि।

---

१ च. °विस्तार°। २ क.—ङ. विक्रमण°। ३ च. °तक्रार°। ४ क.—ङ. विक्रमण°। ५ च. °क्तिः शब्दस्वरूपं तत्। यदस्व°। ६ क.—ङ. °ति। त°। ७ घ. °दाद्द्विधा। ८ च. °न सर्वसंमतं वि°। ९ ङ. चितश्चार्थे। १० च. °लक्ष्यम°। ११ च. तत्संबन्धहीनः। १२ च. °र्मवि°। १३ च साद्या इ°। १४ क. °शयिदृ°। ग. °शायिकाक्रि°। १५ घ. °शक्तिः सत्त्वं। क. ग. °शक्तिसत्त्वं। १६ च. °र्यविभवसंपन्नं तत्संब°।

चित्तद्वारेणाऽऽत्मेश्वरसंबन्धहेतुर्योगः । स च द्विविधः—क्रियालक्षणः क्रियोपरमलक्षणश्चेति । तत्र जपध्यानादिरूपः क्रियालक्षणः । क्रियोपरमलक्षणस्तु निष्ठासंविद्गत्यादिसंज्ञितः ।

धर्मार्थसाधकव्यापारो विधिः । स च द्विविधः—प्रधानभूतो गुणभूतश्च । तत्र प्रधानभूतः साक्षाद्धर्महेतुश्चर्या । सा द्विविधा—व्रतं द्वाराणि चेति । तत्र भस्मस्नानशयनोपहारजपप्रदक्षिणानि व्रतम् । तदुक्तं भगवता नकुलीशेन—भस्मना त्रिषवणं स्नायीत भस्मनि शयीतेति । अत्रोपहारो नियमः । स च षडङ्गः । तदुक्तं सूत्रकारेण—हसितगीतनृत्यहुडुक्कारनमस्कारजप्यषडङ्गोपहारेणोपतिष्ठेतेति । तत्र हसितं नाम कण्ठोष्ठपुटविस्फूर्जनपुरःसरमहंहहेत्यट्टहासः । गीतं गान्धर्वशास्त्रसमयानुसारेण महेश्वरसंबन्धिगुणधर्मादिनिमित्तानां चिन्तनम् । नाट्यमपि नाट्यशास्त्रानुसारेण हस्तपादादीनामुत्क्षेपणादिकमङ्गप्रत्यङ्गोपाङ्गसहितं भावाभावसमेतं च प्रयोक्तव्यम् । हुडुक्कारो नाम जिह्वातालुसंयोगान्निष्पाद्यमानः पुण्यो वृषनादसदृशो नादः । हुडुगिति शब्दानुकारो वषडितिवत् । यत्र लौकिका भवन्ति तत्रैतत्सर्वं गूढं प्रयोक्तव्यम् । शिष्टं प्रसिद्धम् । द्वाराणि तु क्राथनस्पन्दनमन्दनशृङ्गारणावितत्करणावितद्भाषणानि । तत्रासुप्तस्यैव सुप्तलिङ्गप्रदर्शनं क्राथनम् । वाय्वभिभूतस्येव शरीरावयवानां कम्पनं स्पन्दनम् । उपहतपादेन्द्रियस्येव गमनं मन्दनम् । रूपयौवनसंपन्नां कामिनीमवलोक्याऽऽत्मानं कामुकमिव यैर्विलासैः प्रदर्शयति तच्छृङ्गारणम् । कार्याकार्यविवेकविकलस्येव लोकनिन्दितकर्मकरणमवितत्करणम् । व्याहतापार्थकादिशब्दोच्चारणमवितद्भाषणमिति । गुणभूतस्तु विधिश्चर्यानुग्राहकोऽनुस्नानादिर्भैक्ष्योच्छिष्टादिनिमित्तायोग्यताप्रत्ययनिवृत्त्यर्थः । तदप्युक्तं सूत्रकारेण—अनुस्नाननिर्माल्यलिङ्गधारीति ।

तत्र समासो नाम धर्मिमात्राभिधानम् । तच्च प्रथमसूत्र एव कृतम् । पञ्चानां पदार्थानां प्रमाणतः पञ्चाभिधानं विस्तरः । स खलु राशीकरभाष्ये द्रष्टव्यः ।

---

१ च. °णः । नित्यः क्रि° । २ क. जन्यध्या° । ग. ङ.—जप्यध्या° । ३ च. णः । ब्राह्मणाद्यैरनुष्ठीयमानः फलप्रदः । क्रि° । ४ क.—ङ. °स्तु सं° । ५ घ. °तु च° । ६ च. °तं पारायणं चे° । ७ ग. °स्मश्मशानश° । ८ क. ङ. °शय्यो° । ९ ख. °त्यद्धद्धका° । ग. त्यहुड्डुका° । १० ख. °हहे° । ११ क. ख. घ. ङ. च. °म् । नृत्यम° । १२ च. °शास्त्रसमयानु° । १३ ख. च. °दीनां संक्षेप° । १४ च. तु कायस्पर्शनमादानशृ° । १५ घ. °नमादन° । १६ च. °तस्कर° । १७ च. णादि । त° । १८ च. °ङ्गप्रदर्शनं कायक्रा° । १९ च. मादनम् । २० च. प्रकाशयति । २१ क.—घ. च. °भक्षोच्छि° । २२ ख. °रणभा° ।

एतेषां यथासंभवं लक्षणतो[1]ऽसंकरेणाभिधानं विभागः। स तु विहित[2] एव। शास्त्रान्तरे[3]भ्योऽमीषां गुणातिशयेन[4] कथनं विशेषः। तथाहि—अन्यत्र[5] दुःखनिवृत्तिरेव दुःखान्तः। इह तु पारमैश्वर्यप्राप्तिश्च। अन्यत्राभूत्वा भावि कार्यम्[6]। इह तु नित्यं पश्वादि। अन्यत्र सापेक्षं का[7]रणम्। इह तु निरपेक्षो भगवानेव। अन्यत्र कैवल्यादिफलको योगः। इह तु पारमैश्वर्यदुःखान्तफलकः। अन्यत्र पुनरावृत्तिरूपस्वर्गादिफ[8]लको विधिः। इह पुनरपुनरावृत्तिरूपसामीप्यादिफलकः।

ननु महदेतदिन्द्रजालं यन्निरपेक्षः परमेश्वरः कारणमिति। तथात्वे कर्मवै[9]फल्यं सर्वकार्याणां समसमयसमुत्पादश्चेति दोषद्वयं प्रादुःष्यात्। मैवं मन्येथाः। व्यधिकरणत्वात्। यदि निरपेक्षस्य भगवतः कारणत्वं स्यात्तर्हि कर्मणो वैफल्ये किमायातम्। प्रयोजनाभाव इति चेत्कस्य प्रयोजनाभावः कर्मवैफ[10]ल्ये कारणम्। किं कर्मिणः किंवा भगवतः। नाऽऽद्यः। ईश्वरे[11]च्छानुगृहीतस्य कर्मणः सफलत्वोपपत्तेः। तद[12]ननुगृहीतस्य ययातिप्रभृतिकर्मवत्कदाचिन्निष्फल[13]त्वसंभवाच्च। न चैतावता कर्मस्वप्रवृत्तिः। कर्षकादिवदुपपत्तेः। ईश्वरेच्छायत्तत्वाच्च पशूनां प्रवृत्तेः। नापि द्वितीयः। परमेश्वरस्य पर्याप्तकामत्वेन कर्मसाध्यप्रयोज[14]नापेक्षाया अभावात्। यदुक्तं समसमयसमुत्पाद इति तदप्ययुक्तम्। अचिन्त्यशक्तिकस्य परमेश्वरस्येच्छानुविधायिन्[15]या व्याहतक्रियाशक्त्या कार्यकारित्वाभ्युपगमात्। तदुक्तं संप्रदायविद्भिः।

कर्मादिनिरपेक्षस्तु स्वेच्छा[16]चारी यतो ह्ययम्।
तत[17]ः कारणतः शास्त्रे सर्व[18]कार[19]णकारणम्॥ इति।

ननु दर्शनान्तरेऽपीश्वरज्ञानान्मोक्षो लभ्यत एवेति कुतोऽस्य विशेष इति चेन्मैवं वादीः। विकल्पानुपपत्तेः। किमीश्वरविषयज्ञानमात्रं निर्वाणकारणं किंवा साक्षात्कारः, अथवा यथावत्तत्त्वनिश्चयः। नाऽऽद्यः। शास्त्रमन्तरेणापि प्राकृतजनवद्देवानामधिपो महादेव इति ज्ञानोत्पत्तिमात्रेण मोक्षसिद्धौ शास्त्राभ्यास-

---

१ क. ख. घ. °तोऽभिधानमसंकरेण वि°। २ घ. °हितः। शा°। क.—ग. ङ. °हितशा°। ३ क. ख. ग. ङ. च. °न्तरोक्तपदार्थे गु°। ४ च. °येनाभिधानं। ५ ख. °त्रे गुणनि°। ६ क. ख. ग. करणम्। च. कारकम्। ७ क.—ङ. °दि। इ°। ८ क. ख. ग. घ. °यमु°। ९ ख. बैकल्ये। १० ख. वैकल्ये। ११ ख. °श्वरानु°। १२ च. °दनु°। १३ क. °कत्वाभावा°। ग. घ. °लत्वभावा°। १४ ख. °नाकाङ्क्षाया। १५ ख. न्याऽह°। १६ च. °च्छाकारी यथोचितम्। ततः कर्म्ये स्मृतः शा°। १७ क. नातः। १८ च. °रकका°। १९ क. °णकामता ग. णता मता।

वैफल्यप्रसङ्गात् । नापि द्वितीयः । अनेकमलप्रचयोपचितानां पिशितलोचनानां पशूनां परमेश्वरसाक्षात्कारानुपपत्तेः । तृतीयेऽस्मन्मतापातः । पाशुपतशास्त्रमन्तरेण यथावत्तत्त्वनिश्चयानुपपत्तेः । तदुक्तमाचार्यैः—

ज्ञानमात्रे[3] वृथा शास्त्रं साक्षादृष्टिस्तु दुर्लभा ।
पञ्चार्थादन्यतो नास्ति यथावत्तत्त्वनिश्चयः ॥ इति ।

तस्मात्पुरुषार्थकामैः पुरुषधौरेयैः पञ्चार्थप्रतिपादनपरं पाशुपतशास्त्रमाश्रयणीयम् ।

इति श्रीमत्सायणमाधवीये सर्वदर्शनसंग्रहे नकुलीशपाशुपतदर्शनम् ।

## अथ शैवदर्शनम् ॥ ७ ॥

तमिमं परमेश्वरः कर्मादिनिरपेक्षः कारणमिति पक्षं वैषम्यनैर्घृण्यदोषदूषितत्वात्प्रतिक्षिपन्तः केचन माहेश्वराः शैवागमसिद्धान्ततत्त्वं यथावदीक्षमाणाः कर्मादिसापेक्षः परमेश्वरः कारणमिति पक्षं कक्षीकुर्वाणाः पक्षान्तरमुपक्षिपन्ति पतिपशुपाशभेदात्त्रयः पदार्था इति । तदुक्तं तन्त्रतत्त्वज्ञैः—

त्रिपदार्थं चतुष्पादं महातन्त्रं जगद्गुरुः ।
सूत्रेणैकेन संक्षिप्य प्राह विस्तरतः पुनः ॥ इति ।

अस्यार्थः—उक्तास्त्रयः पदार्था यस्मिन्सन्ति तत्त्रिपदार्थं विद्याक्रियायोगचर्याख्याश्चत्वारः पादा यस्मिंस्तच्चतुष्पादं महातन्त्रमिति । तत्र पशूनामस्वतन्त्रत्वात्पाशानामचैतन्याच्चाद्विलक्षणस्य पत्युः प्रथममुद्देशः । चेतनत्वसाधर्म्यात्पशूनां तदानन्तर्यम् । अवशिष्टानां पाशानामन्ते विनिवेश इति क्रमनियमः । दीक्षायाः परमपुरुषार्थहेतुत्वात्तस्याश्च पशुपाशेश्वरस्वरूपनिर्णयोपायभूतेन मन्त्रमन्त्रेश्वरादिमाहात्म्यनिश्चायकेन ज्ञानेन विना निष्पादयितुमशक्यत्वात्तदवबोधस्य विद्यापादस्य प्राथम्यम् । अनेकविधसाङ्गदीक्षाविधिप्रदर्शकस्य क्रियापादस्य तदानन्तर्यम् । योगेन विना नाभिमतप्राप्तिरिति[11] साङ्गयोगप्रकाशकस्य योगपादस्य तदुत्तरत्वम् । विहिताचरणनिषिद्धवर्जनरूपां चर्यां विना योगोऽपि न निर्वहतीति तत्प्रतिपादकस्य चर्यापादस्य चरमत्वमिति विवेकः ।

---

१ ख. 'वैकल्य° । २ घ. °तानामपि पिशि° । ३ क.–ङ. °त्रे यथाशा° । ४ च. °यमिति रमणीयम् । ५ ग. °शूनां स्व° । ६ ग. अविशि° । ७ ख. °न्ते नि° । ८ क. ख. क्रमं नियमदी° । घ. क्रमं नियमयन्दीक्षा° । ९ च. °न्त्रतन्त्रे° । १० च. °थम्यादने° । ११ च. °ति सांख्ययो° । १२ च. योगेनापि ।

तत्र पतिपदार्थः शिवोऽभिमतः। मुक्तात्मनां विद्येश्वरादीनां च यद्यपि शिवत्वमस्ति तथाऽपि परमेश्वरपारतन्त्र्यात्स्वातन्त्र्यं नास्ति। ततश्च तनुकरणभुवनादीनां भावानां संनिवेशविशिष्टत्वेन कार्यत्वमवगम्यते। तेन च कार्यत्वेनैषां बुद्धिमत्पूर्वकत्वमनुमीयत[1] इत्यनुमानवशात्परमेश्वरप्रसिद्धिरुपपद्यते।

ननु देहस्यैव तावत्कार्यत्वमसिद्धम्। न हि कश्चित्केनचित्कदाचिद्देहः क्रियमाणो दृष्टचरः। सत्यम्। तथाऽपि न केनचित्क्रियमाणत्वं देहस्य दृष्टमिति कर्तृदर्शनापह्नवो[2] न युज्यते। तस्यानुमेयत्वेनाप्युपपत्तेः[3]। तथाहि—देहादिकं कार्यं भवितुमर्हति संनिवेशविशिष्टत्वाद्विनश्वरत्वाद्वा घटादिवत्। तेन[4] च कार्यत्वेन बुद्धिमत्पूर्वकत्वमनुमातुं[5][6] सुकरमेव। विमतं सकर्तृकं कार्यत्वाद्घटवत्। यदुक्तसाधनं तदुक्तसाध्यं[7] यथाऽर्थादि। न यदेवं न तदेवं यथाऽऽत्मादि। परमेश्वरानुमानप्रामाण्यसाधनमन्यत्राकारीत्युपरम्यते।

अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः।
ईश्वरप्रेरितो[8] गच्छेत्स्वर्गं वा[9] श्वभ्रमेव वा॥

इति न्यायेन प्राणिकृतकर्मापेक्षया परमेश्वरस्य कर्तृत्वोपपत्तेः। न च स्वातन्त्र्यविहतिरिति वाच्यम्[10]। करणापेक्षया कर्तुः स्वातन्त्र्यविहतेरनुपलम्भात्। कोषाध्यक्षापेक्षस्य राज्ञः प्रसादादिना दानवत्। यथोक्तं[11] सिद्धगुरुभिः—

*स्वतन्त्रस्याप्रयोज्यत्वं करणादिप्रयोक्तृता।
कर्तुः स्वातन्त्र्यमेतद्धि न[12] कर्माद्य[13]नपेक्षता॥ इति।

तथा च तत्तत्कर्माशयवशाद्भोगतत्साधनतदुपादानादिविशेषज्ञः[14] कर्ताऽनुमानादिसिद्ध इति सिद्धम्। तदिदमुक्तं तत्रभवद्भिर्बृहस्पतिभिः[15]—

इह भोग्यभोगसाधनतदुपादानादि यो विजानाति।
तमृते भवेन्नहीदं पुंस्कर्माशयविपाकज्ञम्॥ इति।

अन्यत्रापि—

* घ. पु. टि.—अप्रयोज्यत्वमविघातकत्वम्।

१ ख. 'द्धिपूर्व°। २ क. ख. °वो यु। ३ क.—ङ. °त्तेः। दे°। ४ क. ख. °न का°। ५ च. °मत्कार्यत्वानुमानं सु°। ६ ख. ग. °मानं सु°। घ. °माने सु°। ७ क.—ङ. साधनं य°। ८ घ. °तोऽगच्छेत्स्व°। ९ च. वा दुःखमे°। १० च. मन्तव्यम्। ११ ङ.—तथो°। १२ क. न कार्याद्यनपेक्षिता। १३ ख. °द्यनपेक्षया। १४ ख. °मांतिज्ञ°। १५ क. ख. ग. घ. °षतः कं°।

विवादाध्यासितं सर्वं बुद्धिमत्कर्तृपूर्वकम् ।
कार्यत्वादावयोः सिद्धं कार्यं कुम्भादिकं यथा ॥ इति ।

सर्वकर्तृत्वादेवास्य सर्वज्ञत्वं सिद्धम् । अज्ञस्य करणासंभवात् । उक्तं च श्रीमन्मृगेन्द्रैः—

सर्वज्ञः सर्वकर्तृत्वात्साधनाङ्गफलैः सह ।
यो यज्जानाति कुरुते स तदेवेति सुस्थितम् ॥ इति ।

अस्तु तर्हि स्वतन्त्र ईश्वरः कर्ता । स तु नाशरीरः । घटादिकार्यस्य शरीरवता कुलालादिना क्रियमाणत्वदर्शनात् । शरीरवत्त्वे चास्मदादिवदीश्वरः क्लेशयुक्तोऽसर्वज्ञः परिमितशक्तिः प्राप्नुयादिति चेन्मैवं मंस्था अशरीरस्याप्यात्मनः स्वशरीरस्पन्दादौ कर्तृत्वदर्शनात् । अभ्युपगम्यापि ब्रूमहे । शरीरवत्त्वेऽपि भगवतो न प्रागुक्तदोषानुषङ्गः । परमेश्वरस्य हि मलकर्मादिपाशजालासंभवेन प्राकृतं शरीरं न भवति । किंतु शाक्तम् । शक्तिरूपैरीशानादिभिः पञ्चभिर्मन्त्रैर्मस्तकादिकल्पनायामीशानमस्तकस्तत्पुरुषवक्त्रोऽघोरहृदयो वामदेवगुह्यः सद्योजातपाद ईश्वर इति प्रसिद्ध्या यथाक्रमानुग्रहतिरोभावादानलक्षणस्थितिलक्षणोद्भवलक्षणकृत्यपञ्चककारणं स्वेच्छानिर्मितं तच्छरीरं न चास्मच्छरीरसदृशम् । तदुक्तं श्रीमन्मृगेन्द्रैः—

मलाद्यसंभवाच्छाक्तं वपुर्नैतादृशं प्रभोः ॥ इति ।

अन्यत्रापि—

तद्वपुः पञ्चभिर्मन्त्रैः पञ्चकृत्योपयोगिभिः ।
ईशतत्पुरुषाघोरवामाद्यैर्मस्तकादिमत् ॥ इति ।

ननु पञ्चवक्त्रस्त्रिपञ्चदृगित्यादिनाऽऽगमेषु परमेश्वरस्य मुख्यत एव शरीरेन्द्रियादियोगः श्रूयत इति चेत्सत्यम् । निराकारे ध्यानपूजाद्यसंभवेन भक्तानुग्रहकरणाय तत्तदाकारग्रहणाविरोधात् । तदुक्तं श्रीमत्पौष्करे—

साधकस्य तु रक्षार्थं तस्य रूपमिदं स्मृतम् ॥ इति ।

अन्यत्रापि—

आकारवांस्त्वं नियमादुपास्यो न वस्त्वनाकारमुपैति बुद्धिः ॥ इति ।

---

१ क. ग. ङ. च. °मत्पूर्वकर्तृकम् । २ क.–ङ. सर्वात्मकत्वा° । ३ ख. अन्यस्य कार° । ४ क. °गेन्द्रे । ५ क. ग. घ. यो यं जाना° । ६ क. ग. तद्वैवेति । ७ च. °र्ता न स तावदृश° । ८ क. °माणकर्तृत्व° । ९ च. °वदनीश्व° । १० क. ख. ग. घ. शक्तिः । ११ ख. °न्मैव । १२ ख. °र्माशयजा° । १३ घ. °गेन्द्रे । १४ ख. ग. मूला° । १५ च. °पपात्रिभिः । १६ च. °द्रिभिरिति ।

कृत्यपञ्चकं प्रपञ्चितं भोजराजेन—

पञ्चविधं तत्कृत्यं सृष्टिस्थितिसंहारतिरोभावः ।
तद्वदनुग्रहकरणं प्रोक्तं सततोदितस्यास्य ॥ इति ।

एतच्च कृत्यपञ्चकं शुद्धाध्वविषये साक्षाच्छिवकर्तृकं कृच्छ्राध्वविषये त्वनन्तादिद्वारेणेति विवेकः । तदुक्तं श्रीमत्करणे—

शुद्धेऽध्वनि शिवः कर्ता प्रोक्तोऽनन्तोऽहिते प्रभोः ॥ इति ।

एवं च शिवशब्देन शिवत्वयोगिनां मन्त्रमन्त्रेश्वरमहेश्वरमुक्तात्मशिवानां सवाचकानां शिवत्वप्राप्तिसाधनेन दीक्षादिनोपायकलापेन सह पतिपदार्थे संग्रहः कृत इति बोद्धव्यम् । तदित्थं पतिपदार्थो निरूपितः ।

संप्रति पशुपदार्थो निरूप्यते—अनणुः क्षेत्रज्ञादिपदवेदनीयो जीवात्मा पशुः । न च चार्वाकादिवद्देहादिरूपः । नान्यदृष्टं स्मरत्यन्य इति न्यायेन प्रतिसंधानानुपपत्तेः । नापि नैयायिकादिवत्प्रकाश्यः । अनवस्थाप्रसङ्गात् । तदुक्तम्—

आत्मा यदि भवेन्मेयस्तस्य माता भवेत्परः ।
पर आत्मा तदानीं स्यात्स परो यदि दृश्यते ॥ इति ।

न च जैनवदव्यापकः । नापि बौद्धवत्क्षणिकः । देशकालाभ्यामनवच्छिन्नत्वात् । तदप्युक्तम्—

अनवच्छिन्नसद्भावं वस्तु यद्देशकालतः ।
तन्नित्यं विभु चेच्छन्तीत्यात्मनो विभुनित्यता ॥ इति ।

नाप्यद्वैतवादिनामिवैकः । भोगप्रतिनियमस्य पुरुषबहुत्वज्ञापकस्य संभवात् । नापि सांख्यानामिवाकर्ता । पाशजालापोहने नित्यनिरतिशयदृक्क्रियारूपचैतन्यात्मकशिवत्वश्रवणात् । तदुक्तं श्रीमन्मृगेन्द्रैः—पाशान्ते शिवताश्रुतेः ॥ इति ।

चैतन्यं दृक्क्रियारूपं तदस्त्यात्मनि सर्वदा ।
सर्वतश्च यतो मुक्तौ श्रूयते सर्वतोमुखम् ॥ इति ।

तत्त्वप्रकाशेऽपि—

मुक्तात्मानोऽपि शिवाः किंत्वेते यत्प्रसादतो मुक्ताः ।
सोऽनादिमुक्त एको विज्ञेयः पञ्चमन्त्रतनुः ॥ इति ।

---

१ च. कृष्णाध्व° । २ च. मन्त्रे° । ३ च. °धकेन । ४ घ. °दार्थसं° । ५ क. ख. ग. घ. अणुक्षे° । ६ क. ख. घ. °तिबन्धानु° । ७ च. °यिकमतव° । ८ ग. °नामेवा° । ९ ग. घ. च. °गेन्द्रे ।

पशुस्त्रिविधः। विज्ञानाकलप्रलयाकलसकलभेदात्। तत्र प्रथमो विज्ञानयोगसंन्याससैर्भोगेन वा कर्मक्षये सति कर्मक्षयार्थस्य कलादिभोगबन्धस्याभावात्केवलमलमात्रयुक्तो विज्ञानाकल इति व्यपदिश्यते। द्वितीयस्तु प्रलयेन कलादेरुपसंहारान्मलकर्मयुक्तः प्रलयाकल इति व्यवह्रियते। तृतीयस्तु मलमायाकर्मात्मकबन्धत्रयसहितः सकल इति + संलप्यते।

तत्र प्रथमो द्विप्रकारो भवति समाप्तकलुषासमाप्तकलुषभेदात्। तत्राऽऽद्यान्कालुष्यपरिपाकवतः पुरुषधौरेयानधिकारयोग्याननुगृह्यानन्तादिविद्येश्वराष्टपदं प्रापयति। तद्विद्येश्वराष्टकं निर्दिष्टं बहुदैवत्ये—

अनन्तश्चैव सूक्ष्मश्च तथैव च शिवोत्तमः।
एकनेत्रस्तथैवैकरुद्रश्चापि त्रिमूर्तिकः॥
श्रीकण्ठश्च शिखण्डी च प्रोक्ता विद्येश्वरा इमे॥ इति।

अन्त्यान्सप्तकोटिसंख्यातान्मन्त्राननुग्रहकरणान्विधत्ते। तदुक्तं तत्त्वप्रकाशे—

पशवस्त्रिविधाः प्रोक्ता विज्ञानप्रलयकेवलौ सकलः।
मलयुक्तस्तत्राऽऽद्यो मलकर्मयुतो द्वितीयः स्यात्॥
मलमायाकर्मयुतः सकलस्तेषु द्विधा भवेदाद्यः।
आद्यः समाप्तकलुषोऽसमाप्तकलुषो द्वितीयः स्यात्॥
आद्याननुगृह्य शिवो विद्येशत्वे नियोजयत्यष्टौ।
मन्त्रांश्च करोत्यपरांस्ते चोक्ताः कोटयः सप्त॥ इति।

सोमशंभुनाऽप्यभिहितम्—

विज्ञानाकलनामैको द्वितीयः प्रलयाकलः।
तृतीयः सकलः शास्त्रेऽनुग्राह्यस्त्रिविधो मतः॥
तत्राऽऽद्यो मलमात्रेण युक्तोऽन्यो मलकर्मभिः।
कलादिभूमिपर्यन्ततत्त्वैस्तु सकलो युतः॥ इति।

प्रलयाकलोऽपि द्विविधः—पक्वपाशद्वयस्तद्विलक्षणश्च। तत्र प्रथमो मोक्षं प्राप्नोति। द्वितीयस्तु पर्यष्टकयुतः कर्मवशान्नानाविधजन्मभाग्भवति। तदप्युक्तं तत्त्वप्रकाशे—

---

+ घ. पु. टि.—सम्यगुच्यते।

१ ख. °सैर्योगे°। २ ग. वा. कर्मक्षया°। ३ क. ख. ग. °लमा°। ४ क. ख. ग. °न काला°। ५ ख. °प्य त°। ६ ख. °ज्ञानाप्र°। ७ घ. °त्रान्यो म°। ८ क. ख. ग. युक्तो द्वि°। ९ ख. युक्तस°। १० क. घ. च. °ज्ञानक°।

प्रलयाकलेषु येषामपक्वमलकर्मणी व्रजन्त्येते ।
पुर्यष्टकदेहयुता योनिषु निखिलासु कर्मवशात् ॥ इति ।

पुर्यष्टकमपि तत्रैव निर्दिष्टम्—

स्यात्पुर्यष्टकमन्तःकरणं धीकर्म करणानि ॥ इति ।

विवृतं चाघोरशिवाचार्येण—पुर्यष्टकं नाम प्रतिपुरुषं नियतः सर्गादारभ्य कल्पान्तं मोक्षान्तं वा स्थितः पृथिव्यादिकलापर्यन्तस्त्रिंशत्तत्त्वात्मकः सूक्ष्मो देहः । तथा चोक्तं तत्त्वसंग्रहे—

वसुधाद्यस्तत्त्वगणः प्रतिपुंनियतः कलान्तोऽयम् ।
पर्यटति कर्मवशाद्भुवनजदेहेष्वयं च सर्वेषु ॥ इति ।

तथा चायमर्थः समपद्यत—अन्तःकरणशब्देन मनोबुद्ध्यहंकारचित्तवाचिनाऽन्यान्यपि पुंसो भोगक्रियायामन्तरङ्गाणि कलाकालनियतिविद्यारागप्रकृतिगुणाख्यानि सप्त तत्त्वान्युपलक्ष्यन्ते । धीकर्मशब्दे ज्ञेयानि पञ्च भूतानि तत्कारणानि च तन्मात्राणि विवक्ष्यन्ते । करणशब्देन ज्ञानकर्मेन्द्रियदशकं संगृह्यते । ननु श्रीमत्कालोत्तरे—

शब्दः स्पर्शस्तथा रूपं रसो गन्धश्च पञ्चकम् ।
बुद्धिर्मनस्त्वहंकारः पुर्यष्टकमुदाहृतम् ॥

इति श्रूयते । तत्कथमन्यथा कथ्यते । अद्धा । अत एव च तत्रभवता रामकण्ठेन तत्सूत्रं त्रिंशत्तत्त्वपरतया व्याख्यायीत्यलमतिप्रपञ्चेन । तथाऽपि कथं पुनरस्य पुर्यष्टकत्वम् । भूततन्मात्रबुद्धीन्द्रियकर्मेन्द्रियान्तःकरणसंज्ञैः पञ्चभिर्वर्गैस्तत्कारणेन प्रधानेन कलादिपञ्चकात्मना वर्गेण चाऽऽरब्धत्वादित्यविरोधः । तत्र पुर्यष्टकयुतान्विशिष्टपुण्यसंपन्नान्कांश्चिदनुगृह्य भुवनपतित्वमत्र महेश्वरोऽनन्तः प्रयच्छति । तदुक्तम्—

कांश्चिदनुगृह्य वितरति भुवनपतित्वं महेश्वरस्तेषाम् ॥ इति ।

सकलोऽपि द्विविधः । पक्वकलुषापक्वकलुषभेदात् । तत्राऽऽद्यान्परमेश्वरस्तत्परिपाकपरिपाट्या तदनुगुणशक्तिपातेन मण्डल्याद्यष्टादशोत्तरशतं मन्त्रेश्वरपदं

---

१ घ. °पक्वे मलकर्मणी । ईशप्रेरणविवशा जन्ममृती पुनर्व्रजन्त्यन्ये । पु° । २ क. ख, ग. °र्माणि पुनर्व्रजन्त्यन्ये । पु° । ३ घ. °रणधीकर्मकार° । ४ च. कलान्तं । ५ क. ग. च. °चाऽवस्थि° । ६ घ. °रवा° । ७ क. ख. ग. घ. °कलानि° । ८ क. °यतवि° । ९ च. °लक्ष्यन्ते । १० ख. घ. °कार° । ११ क. ख. ग. घ. °न्ते । कार° । १२ ख. संग्राह्य° १३ घ. रूपरसौ ग° । १४ क. ख. ग. घ. ङ. रामकण्ठेन । च. रामकर्णेन । १५ घ. °त्रं सतत्त्वप° । च. त्रं त्रिंशत्तत्त्ववाक्तत° । १६ घ.—च. °कर° । १७ क. ख. ग. घ. °कञ्चुका° । १८ क. ग. °त्वमन्त्रम° । १९ ग. कांश्चि° । २० ख. °महेश्वर° । २१ क. ग° °शतम ।

प्रापयति । तदुक्तम्—

> शेषा भवन्ति सकलाः कलादियोगादहर्मुखे काले ।
> शतमष्टादश तेषां कुरुते स्वयमेव मन्त्रेशान् ॥
> तत्राष्टौ मण्डलिनः क्रोधाद्यास्तत्समाश्च वीरेशः ।
> श्रीकण्ठः शतरुद्राः शतमित्यष्टादशाभ्यधिकम् ॥ इति ।

तत्परिपाकाधिक्यनिरोधेन शक्त्युपसंहारेण दीक्षाकरणेन मोक्षप्रदो भवत्याचार्यमूर्तिमास्थाय परमेश्वरः । तदप्युक्तम्—

> परिपक्वमलानेतानुत्सादनहेतुशक्तिपातेन ।
> योजयति परे तत्त्वे स दीक्षयाऽऽचार्यमूर्तिस्थः ॥ इति ।

श्रीमन्मृगेन्द्रेऽपि—

> पूर्वं व्यत्यासितस्याणोः पाशजालमपोहति ॥ इति ।

व्याकृतं च नारायणकण्ठेन । तत्सर्वं तत एवावधार्यम् । अस्माभिस्तु विस्तरभिया न प्रस्तूयते । अपक्वकलुषान्बद्धानणून्भोगभाजो विधत्ते परमेश्वरः कर्मवशात् । तदप्युक्तम्—

> बद्धाञ्शेषानपरान्विनियुङ्क्ते भोगभुक्तये पुंसः ।
> तत्कर्मणामनुगमादित्येवं कीर्तिताः पशवः ॥ इति ।

अथ पाशपदार्थः कथ्यते । पाशश्चतुर्विधः । मलकर्ममायारोधशक्तिभेदात् । ननु—

> शैवागमेषु मुख्यं पतिपशुपाशा इति क्रमात्रितयम् ।
> तत्र पतिः शिव उक्तः पशवो ह्यणवोऽर्थपञ्चकं पाशाः ॥

इति पाशः पञ्चविधः कथ्यते । तत्कथं चतुर्विध इति गण्यते । उच्यते—बिन्दोर्मायात्मनः शिवतत्त्वपदवेदनीयस्य शिवपदप्राप्तिलक्षणपरममुक्त्यपेक्षया पाशत्वेऽपि तद्योगस्य विद्येश्वरादिपदप्राप्तिहेतुत्वेनापरमुक्तित्वात्पाशत्वेनानुपादानमित्यविरोधः । अत एवोक्तं तत्त्वप्रकाशे—पाशाश्चतुर्विधाः स्युरिति । श्रीमन्मृगेन्द्रेऽपि—

> प्रावृतीशौ बलं कर्म मायाकार्यं चतुर्विधम् ।
> पाशजालं समासेन धर्मा नाम्नैव कीर्तिताः ॥ इति ।

अस्यार्थः—प्रावृणोति प्रकर्षेणाऽऽच्छादयत्यात्मनः स्वाभाविक्यौ दृक्क्रिये

१ घ. शतरुद्रः । २ ङ. °नश° । ३ क. ग. घ. कीर्त्यते । ४ ग. °पदाप्रा° । ५ क. ख. °तीशो ब° । च. °ती शबले क° । ६ क. बले । ७ ग. °जालस° । ८ घ. °र्तितम् ।

इति प्रावृतिरशुचिर्मलः। स च ईष्टे स्वातन्त्र्येणेति ईशः। तदुक्तम्—

एको ह्यनेकशक्तिर्दृक्क्रियथयोश्छादको मलः पुंसः।
तुषतण्डुलवज्ज्ञेयस्ताम्राश्रितकालिकावद्वा॥ इति।

बलं रोधशक्तिः। अस्याः शिवशक्तेः पाशाधिष्ठानेन पुरुषतिरोधायकत्वा-दुपचारेण पाशत्वम्। तदुक्तम्—

तासामहं वरा शक्तिः सर्वानुग्राहिका शिवा।
धर्मानुवर्तनादेव पाश इत्युपचर्यते॥ इति।

क्रियते फलार्थिभिरिति कर्म धर्माधर्मात्मकं बीजाङ्कुरवत्प्रवाहरूपेणानादि। यथोक्तं श्रीमत्किरणे—

यथाऽनादिर्मलस्तस्य कर्माल्पकमनादिकम्।
यद्यनादि न संसिद्धं वैचित्र्यं केन हेतुना॥ इति।

मात्यस्यां शक्त्यात्मना प्रलये सर्वं जगत्सृष्टौ व्यक्तिमायातीति माया यथोक्तं श्रीमत्सौरभेये—

शक्तिरूपेण कार्याणि तल्लीनानि महाक्षये।
विकृतौ व्यक्तिमायाति सा कार्येण कलादिना॥ इति।

यद्यप्यत्र बहु वक्तव्यमस्ति तथाऽपि ग्रन्थभूयस्त्वभयादुपरम्यते। तदित्थं पतिपशुपाशपदार्थास्त्रयः प्रदर्शिताः।

पतिविद्ये तथाऽविद्या पशुः पाशश्च कारणम्।
तन्निवृत्ताविति प्रोक्ताः पदार्थाः षट् समासतः॥

इत्यादिना प्रकारान्तरं ज्ञानरत्नावल्यादौ प्रसिद्धम्। सर्वं तत एवावगन्तव्य-मिति सर्वं समञ्जसम्।

इति श्रीमत्सायणमाधवीये सर्वदर्शनसंग्रहे शैवदर्शनम्।

## अथ प्रत्यभिज्ञादर्शनम्॥ ८॥

---

अत्रापेक्षाविहीनानां जडानां कारणत्वं दुष्यतीत्यपरितुष्यन्तो मतान्तरम-न्विष्यन्तः परमेश्वरेच्छावशादेव जगन्निर्माणं परिघुष्यन्तः स्वसंवेदनोपपत्त्याऽऽ-

१ घ. °वृत्तिर°। २ क. ख. घ.—च. °योच्छाद°। ३ च. °म्। तस्मान्माहेश्वरी शक्तिः। ४ ख. घ. °क्रियाफ°। ५ घ. °मत्मि°। ६ क. ख. °मत्कर°। ७ क.—ङ. °द्धिरसं सि°। ८ च. त्यस्य श°। ९ ख. घ. °यान्ति सा। १० क. ख. ग. प्रादर्शिषत।

गमसिद्धप्रत्यगात्मतादात्म्ये नानाविधमानमेयादिभेदाभेदशालिपरमेश्वरोऽनन्यमुख[1]प्रेक्षित्वलक्षणस्वातन्त्र्यभाक्स्वात्मदर्पणे भावान्प्रति[2]बिम्बवदवभासयतीति भणन्तो बाह्याभ्यन्तरचर्याप्राणायामादिक्लेशप्रयासकलापवैधुर्येण[3] सर्वसुलभमभिनवं प्रत्यभिज्ञामात्रं परापरसिद्ध्युपायमभ्युपगच्छन्तः परे माहेश्वराः प्रत्यभिज्ञाशास्त्रमभ्य[4]स्यन्ति[5]। तस्येयत्ताऽपि न्यरूपि परीक्षकैः—

सूत्रं वृत्तिर्विवृतिर्लघ्वी बृहतीत्युभे विमर्शिन्यौ।
प्रकरणविवरणपञ्चकमिति शास्त्रं प्रत्यभिज्ञायाः॥ इति।

तत्रेदं प्रथमं सूत्रम्—

कथंचिदासाद्य महेश्वरस्य दास्यं जनस्याप्युपकारमिच्छन्।
समस्तसंपत्समवाप्तिहेतुं तत्प्रत्यभिज्ञामुपपादयामि॥ इति।

कथंचिदिति। परमेश्वराभिन्न[6]गुरुचरणारविन्दयुगलसमाराधनेन परमेश्वरघटितेनैवेत्यर्थः। आसाद्येति। आ समन्तात्परिपूर्णतया सादयित्वा स्वात्मोपभो[7]ग्यतां निरर्गलां गमयित्वा। तदनेन विदितवेद्यत्वेन परार्थशास्त्रकरणेऽधिकारो दर्शितः। अन्यथा प्रतारणमेव प्रसजेत्[8]। मायोत्तीर्णा अपि महामायाधिकृता विष्णुविरिञ्च्याद्या यदीयैश्वर्यलेशेनेश्वरीभूताः स भगवाननवच्छिन्नप्रकाशानन्दस्वातन्त्र्यपरमार्थो महेश्वरः। तस्य दास्यम्[9]। दीयतेऽस्मै स्वामिना सर्वं यथाभिलषितमिति दासः। परमेश्वरस्वरूपस्वातन्त्र्यपात्रमित्यर्थः। जनशब्देनाधिकारिविषयनियमाभावः प्रादर्शि। यस्य यस्य हीदं स्वरूपकथनं तस्य तस्य महाफलं भवति। प्रज्ञानस्यैव परमार्थफलत्वात्। तथोपदिष्टं शिवदृष्टौ परमगुरुभिर्भगवत्सोमानन्दनाथपादैः[10]—

एकवारं प्रमाणेन शास्त्राद्वा गुरुवाक्यतः।
ज्ञाते शिवत्वे सर्वस्वे प्रतिपत्त्या दृढात्मना॥
करणेन नास्ति कृत्यं क्वापि भावनयाऽपि[11] वा।
ज्ञाते सुवर्णे[12] करणं भावनां[13][14] वा परित्यजेत्॥ इति।

अपिशब्देन स्वात्मनस्तदभिन्नतामाविष्कुर्वता पूर्णत्वेन स्वात्मनि परार्थसंपत्त्यतिरिक्तप्रयोजनान्तरावकाशश्च पराकृतः। परार्थश्च प्रयोजनं भवत्येव।

---

१ क. °रो नान्य°। २ क.—ङ. 'वात्प्रति°। ३ क.- ग. ङ. च. °लावै°। ४ घ. °मभ्यासते। ५ क. ग. °स्यन्त। ख. °स्यन्ततः। ६ ग. °भिज्ञागु°। ७ क. स्वात्मीयभो°। ८ क. ग. प्रसज्येत। ९ क. ख. दास्यादीय°। १० च. °मंट्टटसो°। ११ क.—ङ. °या सकृत। १२ च. °र्णे मा क°। १३ ख. वनाऽपि व्रजेत्। ङ. घ. °वनाऽपि व्रजेदिति। १४ च. °नां व्रजे°।

तल्लक्षणयोगात् । न ह्ययं देवशापः स्वार्थ एव प्रयोजनं न परार्थ इति । अत एवोक्तमक्षपादेन—यमर्थमधिकृत्य प्रवर्तते तत्प्रयोजनम् ( गौ० सू० १ । १ । २४ ) इति । उपशब्दः सामीप्यार्थः । तेन जनस्य परमेश्वरसमीपताकरणमात्रं फलम् । अत एवाऽऽह समस्तेति । परमेश्वरतालाभे हि सर्वाः संपदस्तन्निष्यन्द-मय्यः संपन्ना एव रोहणाचललाभे रत्नसंपद इव । एवं परमेश्वरतालाभे किम-न्यत्प्रार्थनीयम् । तदुक्तमुत्पलाचार्यैः—

भक्तिलक्ष्मीसमृद्धानां किमन्यदुपयाचितम् ।
एतया वा दरिद्राणां किमन्यदुपयाचितम् ॥ इति ।

इत्थं षष्ठीसमासपक्षे प्रयोजनं निर्दिष्टम् । बहुव्रीहिपक्षे तूपपादयामः । सम-स्तस्य बाह्याभ्यन्तरस्य नित्यसुखादेर्या संपत्सिद्धिस्तथात्वप्रकाशस्तस्याः सम्य-गवाप्तिर्यस्याः प्रत्यभिज्ञाया हेतुः सा तथोक्ता । तस्य महेश्वरस्य प्रत्यभिज्ञा प्रत्या-भिमुख्येन ज्ञानम् । लोके हि स एवायं चैत्र इति प्रतिसंधानेनाभिमुखीभूते वस्तुनि ज्ञानं प्रत्यभिज्ञेति व्यवह्रियते । इहापि प्रसिद्धपुराणसिद्धागमानुमाना-दिज्ञातपरिपूर्णशक्तिके परमेश्वरे सति स्वात्मन्यभिमुखीभूते तच्छक्तिप्रतिसंधा-नेन ज्ञानमुदेति नूनं स एवेश्वरोऽहमिति । तामेतां प्रत्यभिज्ञामुपपादयामि । उपपत्तिः संभवः । संभवन्तीति * तत्समर्थाचरणेन प्रयोजनव्यापारेण संपा-दयामीत्यर्थः ।

यदीश्वरस्वभाव एवाऽऽत्मा प्रकाशते तर्हि किमनेन प्रत्यभिज्ञाप्रदर्शनप्रया-सेनेति चेत्तत्रायं समाधिः—स्वप्रकाशतया सततमवभासमानेऽप्यात्मनि माया-वशाद्भागेन प्रकाशमाने पूर्णतावभाससिद्धये दृक्क्रियात्मकशक्त्याविष्करणेन प्रत्यभिज्ञा प्रदर्श्यते । तथा च प्रयोगः—अयमात्मा परमेश्वरो भवितुमर्हति । ज्ञानक्रियाशक्तिमत्त्वात् । यो यावति ज्ञाता कर्ता च स तावतीश्वरः प्रसिद्धे-

* घ. पु. टि.—तत्समर्थाचरणेनेत्यस्य विवरणं प्रयोजनेति । प्रयोजनयुक्तो व्यापारः प्रयोजनव्यापारः । सफलानुष्ठानेनेत्यर्थः ।

१ च. °रधर्मसमीपः शर° । २ क. ग. °पदः । प्° । ३ घ. व । प° । ४ क. ख. घ. ङ. एनया । च. अनया । ५ क.—ग. ङ. च. तूपायः स° । ६ क. नीतिसु° । ङ. नित्यासु° । ग. नीतसु° । ७ ख. घ. °स्वत्त्वप्र° । ८ क. ग. ङ. °तिमाभि° । च. °तिपाभि° । ९ च. °द्धान्तागमानादिपरिज्ञा° । १० क. ख. °दिपरिज्ञा° । ग. °दिपरिज्ञाने प° । घ. दिपरिज्ञाते प° । ११ क. ग.—च. °मेनां प्र° । १२ क. ग. °वन्तीति । १३ च. प्रत्यभिज्ञाख्या° । १४ क. ग.—च. °शने । १५ क. ख. °सनसि° । १६ ख. त्मश° । १७ ख. °प्रसिद्धः प्र° ।

श्वरवद्राजवद्वा । आत्मा च विश्वज्ञाता कर्ता च । तस्मादीश्वरोऽयमिति । अवयवपञ्चकस्याऽऽश्रयणं मायावदेव नैयायिकमतस्य * कक्षीकरणात् । तदुक्तमुदयेकरसूनुना—

कर्तरि ज्ञातरि स्वात्मन्यादिसिद्धे महेश्वरे ।
अजडात्मा निषेधं वा + सिद्धिं वा विदधीत कः ॥
किंतु मोहवशादस्मिन्दृष्टेऽप्यनुपलक्षिते ।
शक्त्याविष्करणेनेयं प्रत्यभिज्ञोपदर्श्यते ॥

तथाहि—सर्वेषामिह भूतानां प्रतिष्ठा × जीवदाश्रया ।
ज्ञानं क्रिया च भूतानां जीवतां जीवनं मतम् ॥
तत्र ज्ञानं स्वतःसिद्धं क्रियां ()कायाश्रिता सती ।
... परैरप्युपलक्ष्येत तथाऽन्यज्ञानमुच्यते ॥ इति ।
या चैषां प्रतिभा तत्तत्पदार्थक्रमरूषिता ।
अक्रमानन्दचिद्रूपः प्रमाता स महेश्वरः ॥ इति च ।

सोमानन्दनाथपादैरपि—

सदा शिवात्मना वेत्ति सदा वेत्ति मदात्मना ॥ इत्यादि ।

ज्ञानाधिकारपरिसमाप्तावपि—

तदैक्येन विना नास्ति संविदां लोकपद्धतिः ।
प्रकाशैक्यात्तदेकत्वं मातैकः स इति स्थितिः ॥
स एव विमृशत्वेन नियतेन महेश्वरः ।
विमर्श एव देवस्य शुद्धे ज्ञानक्रिये यतः ॥ इति ।

विवृतं चाभिनवगुप्ताचार्यैः । 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' ( का० २ । २ ) इति श्रुत्या प्रकाशचिद्रूपमहिम्ना सर्वस्य भाव-

---

* घ. पु. टि—तस्य पञ्चावयवानुमानस्य कक्षीकरणादङ्गीकारात् । + घ. पु. टि—जडता सिद्धिम् । × घ. पु. टि—जीवतामाश्रयो जीवदाश्रयः । () घ. पु. टि—काइयाश्रिता प्रकाशाश्रिता सती वर्तते । ... घ. प. टि—तयाऽपरैरप्यात्मोपलक्ष्येत् तस्याः ।

---

१ क. ग. °श्वत्र ज्ञा° ख. घ. श्वस्य ज्ञा° । २ ग.—च. °यावादेन नै° । ३ ख. °कवत्तस्य । ख. °कपदस्य । ४ घ. °क्षीकारात् । ५ क. ख. ग. °दयाक° । ६ च. अयमात्मा । ७ ख. घ. °भिज्ञा प्रद° । ८ घ. °श्रयः । ९ च. °वनिर्मित° । १० क.—ङ.—°या काइयाश्रि° । क. ग.—च. तयाऽन्यज्ज्ञा° । १२ क. ख. घ. °रूषिता । १३ घ. महात्मना । १४ क. ग.—च. स्थितः । १५ क. ख. घ. एवार्थमृश° । ग. °एवावभृश° । ङ.—एवार्थमृश° । १६ ङ.—च. °तार्यैः । १७ क. ख. ग. °त्या च प्र° ।

जातस्य भासकत्वमभ्युपेयते । ततश्च विषयप्रकाशस्य नीलप्रकाशः पीतप्रकाश इति विषयोपरागभेदाद्भेदः । वस्तुतस्तु देशकालाकारसंकोचवैकल्यादभेद एव । स एव चैतन्यरूपः प्रकाशः प्रमातेत्युच्यते । तथा च पठितं शिवसूत्रेषु—चैतन्यमात्मेति । तस्य चिद्रूपत्वमनच्छिन्नविमर्शत्वमनन्योन्मुखत्वमानन्दैकघनत्वं माहेश्वर्यमिति पर्यायः । स एव ह्यहं भावात्मा विमर्शः शुद्धे पारमार्थिक्यौ ज्ञानक्रिये । तत्र प्रकाशरूपता ज्ञानम् । स्वतो जगन्निर्मातृत्वं क्रिया । तच्च निरूपितं क्रियाधिकारे—

> एष चाऽऽनन्दशक्तित्वादेवमाभासयत्यमून् ।
> भावानिच्छावशादेषां क्रिया निर्मातृताऽस्य सा ॥ इति ।

उपसंहारेऽपि—

> इत्थं तथा घटपटाद्याकारजगदात्मना ।
> तिष्ठासोरेवमिच्छैव हेतुकर्तृकृता क्रिया ॥ इति ।
> तस्मिन्सतीदमस्तीति कार्यकारणताऽपि या ।
> साऽप्यपेक्षाविहीनानां जडानां नोपपद्यते ॥

इति न्यायेन यतो जडस्य न कारणता न वाऽनीश्वरस्य चेतनस्यापि तस्मात्तेन तेन जगद्गतजन्मस्थित्यादिभावविकारतत्तद्भेदक्रियासहस्ररूपेण स्थातुमिच्छोः स्वतन्त्रस्य भगवतो महेश्वरस्येच्छैवोत्तरोत्तरमुच्छूनस्वभावा क्रिया विश्वकर्तृत्वं वोच्यत इति । इच्छामात्रेण जगन्निर्माणमित्यत्र दृष्टान्तोऽपि स्पष्टं निर्दिष्टः—

> योगिनामपि मृद्बीजे विनैवेच्छावशेन यत् ।
> घटादि जायते तत्तत्स्थिरस्वार्थक्रियाकरम् ॥ इति ।

यदि घटादिकं प्रति मृदाद्येव परमार्थतः कारणं स्यात्तर्हि कथं योगीच्छामात्रेण घटादिजन्म स्यात् । अथोच्येतान्य एव मृद्बीजादिजन्या घटाङ्कुरादयो योगीच्छाजन्यास्त्वन्य एवेति तत्रापि बोध्यसे—सामग्रीभेदात्तावत्कार्यभेद इति सर्वजनप्रसिद्धम् ।

ये तु वर्णयन्ति नोपादानं विना घटाद्युत्पत्तिरिति योगी त्विच्छया परमाणून्व्यापारयन्संघटयतीति तेऽपि बोधनीयाः । यदि परिदृष्टकार्यकारणभावविपर्ययो न लभ्येत तर्हि घटे मृद्दण्डचक्रादि देहे स्त्रीपुरुषसंयोगादि सर्व-

---

१ च. °स्य विमर्शरूप° । २ च. °त्वसुखत्वमा° । ३ ख. एवाहं भा° । ४ क. ग. घ. ह्यहंभा° । ५ ख. °तृतोऽस्य । च. °तृताऽस्य ते । उ० । ६ ख. °न ज° । ७ घ. °भावक्रिया । ८ च. °स्वात्मक्रियात्मकमिति । ९ ङ.—°न्यास्त्वन्या ए° । च. °न्यास्तदन्या ए° । १० ख. °त्वि च्छाप° । ११ च. °दृश्यका° ।

मपेक्षेत । तथा च योगीच्छासमनन्तरसंजातघटदेहादिसंभवो दुःसमर्थ एव स्यात् । चेतन एव तु तथा भाति भगवान्भूरिभर्गो[1] महादेवो नियत्यनुवर्तनोल्लङ्घनघनतरस्वातन्त्र्य इति पक्षे न काचिदनुपपत्तिः । अत एवोक्तं वसुगुप्ताचार्यैः—

निरुपादानसंभारमभित्तावेव तन्वते ।

जगच्चित्रं नमस्तस्मै कलानाथाय शूलिने ॥ इति ।

ननु प्रत्यगात्मनः परमेश्वराभिन्नत्वे संसारसंबन्धः कथं भवेदिति चेत्तत्रोक्तमागमाधिकारे—

एष प्रमाता मायान्धः संसारी कर्मबन्धनः ।

विद्यादिज्ञापितैश्वर्यश्चिद्घनो मुक्त उच्यते ॥ इति ।

ननु प्रमेयस्य प्रमात्रभिन्नत्वे बद्धमुक्तयोः प्रमेयं प्रति को विशेषः । अत्राप्युत्तरमुक्तं तत्त्वार्थसंग्रहाधिकारे—

मेयं साधारणं मुक्तः स्वात्माभेदेन मन्यते ।

महेश्वरो यथा बद्धः पुनरत्यन्तभेदवत् ॥ इति ।

नन्वात्मनः परमेश्वरत्वं स्वाभाविकं चेत्तदर्थः प्रत्यभिज्ञाप्रार्थनया । न हि बीजमप्रत्यभिज्ञातं सति सहकारिसाकल्येऽङ्कुरं नोत्पादयति । तस्मात्कस्मादात्मप्रत्यभिज्ञाने निर्बन्ध इति चेदुच्यते । शृणु तावदिदं रहस्यम् । द्विविधा ह्यर्थक्रिया बाह्याऽङ्कुरादिका प्रमातृविश्रान्तिचमत्कारसारा प्रीत्यादिरूपा च । तत्राऽऽद्या प्रत्यभिज्ञानं नापेक्षते । द्वितीया तु तदपेक्षत एव । इहाप्यहमीश्वर इत्येवंभूतचमत्कारसारा परापरसिद्धिलक्षणजीवात्मैकत्वशक्तिविभूतिरूपार्थक्रियेति स्वरूपप्रत्यभिज्ञानमपेक्षणीयम् । ननु प्रमातृविश्रान्तिसाराऽर्थक्रिया प्रत्यभिज्ञानेन विनाऽदृष्टा सती तस्मिन्दृष्टेति क्व दृष्टम् । अत्रोच्यते । नायकगुणगणसंश्रवणप्रवृद्धानुरागा काचन कामिनी मदनविह्वला विरहक्लेशमसहमाना मदनलेखावलम्बनेन स्वावस्थानिवेदनानि विधत्ते । तथा वेगात्तन्निकटमटन्त्यपि तस्मिन्नवलोकितेऽपि[18] तदवलोकनं तदीयगुणपरामर्शाभावे जनसाधारणत्वं प्राप्ते

---

१ ख. °ति भर्गो भूरिभाग इति भर्गो म° । २ ख. °भागो । ३ ख. °यन्त्यानु° । ४ च. °र्तनमुल्लङ्घ्य घ° । ५ घ. °रस्वाभि° । ६ ख. °मसितावेद्यत° । ७ ङ.—च. °लाऽऽख्या-ध्याय । ८ च. विज्ञानज्ञा° । ९ क. ग.—च. बन्धमु° । १० ख. योः को । ११ ख. मुच्यते । १२ ख. °ज्ञाप्रथमया° । १३ ख. °ज्ञाते स° । १४ क. °बन्धन इ° । ग. निबन्धन इ° । १५ ख. °द्या सा त° । १६ ख. °णसं° । १७ ख. ग. ङ.—च. टत्यपि । १८ क. °पि तदी° । ख. °पि ते तद° । घ. °पि तमलो° ।

हृदयंगमभावं न लभते। यदा तु *दूतीवचनात्तदीयगुणपरामर्शं करोति तदा तत्क्षणमेव पूर्णभावमभ्येति। एवं स्वात्मनि विश्वेश्वरात्मना भासमानेऽपि तन्निर्भासनं तदीयगुणपरामर्शविरहसमये पूर्णभावं न संपादयति। यदा तु गुरुवचनादिना सर्वज्ञत्वसर्वकर्तृत्वादिलक्षणपरमेश्वरोत्कर्षपरामर्शो जायते तदा तत्क्षणमेव पूर्णात्मतालाभः। तदुक्तं चतुर्थे विमर्शे—

तैस्तैरप्युपयाचितैरुपनतस्तस्याः स्थितोऽप्यन्तिके
कान्तो लोकसमान एवमपरिज्ञातो न रन्तुं यथा।
लोकस्यैव तथाऽनवेक्षितगुणः स्वात्माऽपि विश्वेश्वरो
नैवायं निजवैभवाय तदियं तत्प्रत्यभिज्ञोदिता॥ इति।

अभिनवगुप्तादिभिराचार्यैर्विहितप्रतानोऽप्ययमर्थः संग्रहमुपक्रममाणैरस्माभिर्विस्तरभिया न प्रतानित इति सर्वं शिवम्।

इति श्रीमत्सायणमाधवीये सर्वदर्शनसंग्रहे प्रत्यभिज्ञादर्शनम्॥

## अथ रसेश्वरदर्शनम्॥ ९॥

---

अपरे माहेश्वराः परमेश्वरतादात्म्यवादिनोऽपि पिण्डस्थैर्ये सर्वाभिमता जीवन्मुक्तिः सेत्स्यतीत्यास्थाय पिण्डस्थैर्योपायं पारदादिपदवेदनीयं रसमेव संगिरन्ते। रसस्य पारदत्वं संसारपरपारप्रापणहेतुत्वेन। तदुक्तम्—

संसारस्य परं पारं दत्तेऽसौ पारदः स्मृतः॥ इति।

रसार्णवेऽपि—

पारदो गदितो यस्मात्परार्थं साधकोत्तमैः।
सुप्तोऽयं मत्समो देवि मम प्रत्यङ्गसंभवः॥
मम देहरसो यस्माद्रसस्तेनायमुच्यते॥ इति।

ननु प्रकारान्तरेणापि जीवन्मुक्तियुक्तौ नेयं वाचोयुक्तिर्युक्तिमतीति चेन्न।

---

* घ. पु. टि.—निकटवर्तिसख्यादिवचनाद्वा।

---

१ ख. च. °वं ल°। २ क.—ङ. तु मूर्तिव°। ३ क. ख. ग. घ. नादिना तदी°। ४ क.—ग ङ. °मत्येति। ५ क. ख. ग. घ. °ज्ञस°। ६ घ. पूर्णता°। ७ च. °ताभावः। त°। ८ ख. °नतं तस्याः। ९ ङ.—च. मैवा°। १० च. °दिदं त°। ११ क. °मर्थसं। १२ क. घ. भिज्ञानद°। १३ घ. °पायपा°।

षट्स्वपि दर्शनेषु देहपातानन्तरं मुक्तेरुक्ततया तत्र विश्वासानुपपत्त्या निर्विचिकित्सप्रवृत्तेरनुपपत्तेः । तदप्युक्तं तत्रैव—

षड्दर्शनेऽपि मुक्तिस्तु दर्शिता पिण्डपातने ।
करामलकवत्साऽपि प्रत्यक्षा नोपलभ्यते ।
तस्मात्तं रक्षयेत्पिण्डं रसैश्चैव रसायनैः ॥ इति ।

गोविन्दभगवत्पादाचार्यैरपि—

इति धनशरीरभोगान्मत्वा नित्यान्सदैव यतनीयम् ।
मुक्तौ सा च ज्ञानात्तच्चाभ्यासात्स च स्थिरे देहे ॥ इति ।

ननु विनश्वरतया दृश्यमानस्य देहस्य कथं नित्यत्वमवसीयत इति चेन्मैवं मंस्थाः । षाट्कौशिकस्य शरीरस्यानित्यत्वेऽपि रसाभ्रकपदाभिलप्यहरगौरीसृष्टिजातस्य नित्यत्वोपपत्तेः । तथा च रसहृदये—

ये चात्यक्तशरीरा हरगौरीसृष्टिजां तनुं प्राप्ताः[1] ।
मुक्तास्ते रससिद्धा मन्त्रगणः किंकरो येषाम् ॥ ( १ । ७ ) इति ।

तस्माज्जीवन्मुक्तिं समीहमानेन योगिना प्रथमं दिव्यतनुर्विधेया । हरगौरीसृष्टिसंयोगजनितत्वं[2] च रसस्य हरजत्वेनाभ्रकस्य गौरीसंभवत्वेन तत्तदात्मकत्वमुक्तम्—

अभ्रकस्तव बीजं तु मम बीजं तु पारदः ।
अनयोर्मेलनं देवि मृत्युदारिद्र्यनाशनम् ॥ इति ।

अत्यल्पमिदमुच्यते । देवदैत्यमुनिमानवादिषु बहवो रससामर्थ्याद्दिव्यं देहमाश्रित्य जीवन्मुक्तिमाश्रिताः श्रूयन्ते रसेश्वरसिद्धान्ते—

देवाः केचिन्महेशाद्या दैत्याः काव्यपुरःसराः ।
मुनयो[3] बालखिल्याद्या नृपाः सोमेश्वरादयः ॥
गोविन्दभगवत्पादाचार्यो गोविन्दनायकः ।
चर्वटिः[4] कपिलो व्यालिः कापालिः[5] कन्दलायनः ॥
एतेऽन्ये बहवः सिद्धा जीवन्मुक्ताश्चरन्ति हि ।
तनुं रसमयीं प्राप्य तदात्मककथाचणाः[6] ॥ इति ।

अयमेवार्थः[7] परमेश्वरेण परमेश्वरीं प्रति प्रपञ्चितः—

कर्मयोगेण देवेशि प्राप्यते पिण्डधारणम् ।

---

१ क.—ग. ङ. च. °प्ताः । वन्ध्यास्ते । च. प्ताः । नान्धास्ते । २ घ. °ष्टिजान्तरत्वं हरगौरीसंयोगजनितत्वं र° । ३ च. °योऽमी वसिष्ठाद्या । ४ च. पर्पटिः । ५ च. कपालिः । ६ घ. तपात्मानोऽथ चारणाः । इ° । ७ क.—ग. ङ. च. °वास्यार्थः ।

रसश्च पवनश्चेति कर्मयोगो द्विधा स्मृतः ॥
मूर्छितो हरति व्याधीन्मृतो जीवयति स्वयम् ।
बद्धः खेचरतां कुर्याद्रसो वायुश्च भैरवि ॥ इति ।

मूर्छितस्वरूपमुक्तम्—

नानावर्णो भवेत्सूतो विहाय घनचापलम् ।
लक्षणं दृश्यते यस्य मूर्छितं तं वदन्ति हि ॥
आर्द्रत्वं च घनत्वं च तेजो गौरवचापलम् ।
यस्यैतानि न दृश्यन्ते तं विद्यान्मृतसूतकम् ॥ इति ।

अन्यत्र बद्धस्वरूपमप्यभ्यधायि—

अक्षतश्च लघुद्रावी तेजस्वी निर्मलो गुरुः ।
स्फोटनं पुनरावृत्तौ बद्धसूतस्य लक्षणम् ॥

ननु हरगौरीसृष्टिसिद्धौ पिण्डस्थैर्यमास्थातुं पार्यते । तत्सिद्धिरेव कथमिति चेन्न । अष्टादशसंस्कारवशात्तदुपपत्तेः । तदुक्तमाचार्यैः—

तस्य प्रसाधनविधौ सुधिया प्रतिकर्मनिर्मलाः प्रथमम् ।
अष्टादश संस्कारा विज्ञातव्याः प्रयत्नेन ॥ इति ।

ते च संस्कारा निरूपिताः—

स्वेदनमर्दनमूर्छनस्थापनपातननिरोधनियमाश्च ।
दीपनगगनग्रासप्रमाणमथ जारणपिधानम् ॥
गर्भद्रुतिबाह्यद्रुतिक्षारणसंरागसारणाश्चैव ।
क्रामणवेधौ भक्षणमष्टादशधेति रसकर्म ॥ इति ।

तत्प्रपञ्चस्तु गोविन्दभगवत्पादाचार्यसर्वज्ञरामेश्वरभट्टारकप्रभृतिभिः प्राचीनैराचार्यैर्निरूपित इति ग्रन्थभूयस्त्वभयादुदास्यते । न च रसशास्त्रं धातुवादार्थमेवेति मन्तव्यम् । देहवेधद्वारा मुक्तेरेव परमप्रयोजनत्वात् । तदुक्तं रसार्णवे—

लोहवेधस्त्वया देव यदर्थमुपवर्णितः ।
तं देहवेधमाचक्ष्व येन स्यात्खेचरी गतिः ॥
यथा लोहे तथा देहे कर्तव्यः सूतकः सता ।
समानं कुरुते देवि प्रत्ययं देहलोहयोः ।
पूर्वं लोहे परीक्षेत पश्चाद्देहे प्रयोजयेत् ॥ इति ।

---

१ क. ख. तस्य । २ च. °मा स्थातुं । ३ घ. °र्मलः प्रथमः । अ° । ४ क. °ताः । तदुक्तमाचार्यैः । तथाहि—स्वे° । ५ क. गर्भे द्रु° । ६ क. ख. घ. °गक्षार° । ७ घ. यदुक्तः परमीशितः । क.–ग. ङ. यदुक्तं प° । ८ क. सताम् । ९ ख. °त्ययं दे° ।

ननु सच्चिदानन्दात्मकपरतत्त्वस्फुरणादेव मुक्तिसिद्धौ किमनेन दिव्यदेहसंपादनप्रयासेनेति चेत्तदेतद्वार्तम् । अवार्तशरीरालाभे[1] तद्वार्ताया अयोगात् । तदुक्तं रसहृदये—

गलितानल्पविकल्पः सर्वाध्वविवक्षितश्चिदानन्दः ।
स्फुरितोऽप्यस्फुरिततनोः करोति किं जन्तुवर्गस्य ॥ (१।२०) इति[2] ।
यज्जरया जर्जरितं कासश्वासादिदुःखविशदं च ।
योग्यं तन्न समाधौ प्रतिहतबुद्धीन्द्रियप्रसरम् ॥ (१।२९) ।
बालः षोडशवर्षो विषयरसास्वादलम्पटः परतः ।
यातविवेको वृद्धो मर्त्यः कथमाप्नुयान्मुक्तिम् ॥ इति ।

ननु जीवत्वं नाम संसारित्वम् । तद्विपरीतत्वं मुक्तत्वम् । तथा च परस्परविरुद्धयोः कथमेकायतनत्वमुपपन्नं[3] स्यादिति चेत्तदनुपपन्नम् । विकल्पानुपपत्तेः । मुक्तिस्तावत्सर्वतीर्थकरसंमता । सा किं ज्ञेयपदे निविशते न वा । चरमे शशविषाणकल्पा स्यात् । प्रथमे[4] न जीवनं[5] वर्जनीयम् । अजीवतो[6] ज्ञातृत्वानुपपत्तेः । तदुक्तं रसेश्वरसिद्धान्ते—

रसाङ्कमेयमार्गेको जीवमोक्षोऽन्यथा[7] तु न ।
प्रमाणान्तरवादेषु[8] युक्तिभेदावलम्बिषु ॥
ज्ञातृज्ञेयमिदं विद्धि[9] सर्वतन्त्रेषु[10] संमतम्[11] ।
नाजीवञ्ज्ञास्यतीति[12] ज्ञेयं[13] वदतोऽ[14]स्त्येव जीवनम् ॥ इति ।

न चेदमदृष्टचरमिति मन्तव्यम् । विष्णुस्वामि[15]मतानुसारिभिर्नृपञ्चास्यशरीरस्य[16] नित्यत्वोपपादनात् । तदुक्तं साकारसिद्धौ—

सच्चिन्नित्यनिजाचिन्त्यपूर्णानन्दैकविग्रहम् ।
नृपञ्चास्यमहं वन्दे श्रीविष्णुस्वामिसंमतम् ॥ इति ।

नन्वेतत्सावयवं रूपवदवभासमानं नृकण्ठीरवाङ्गं सदिति न संगच्छत इत्यादिनाऽऽक्षेपपुरःसरं सनकादिप्रत्यक्षं—सहस्रशीर्षा पुरुषः (श्वे० ३।१४) इत्यादिश्रुति[17]—

१ ख. अलाभात् । २ क.—ग. ङ. च. °ति । यं जर° । ३ क. ख. ग. °कायन° । ४ ख. ग. घ. °मे जी° । ५ ग. °नं न वर्जनीयमजीविनो ज्ञा° । ६ क. ग. °वनो ज्ञा° । ख. °वने ज्ञा° । ७ ङ. च. °क्षोऽस्त्यधोमनाः । प्र° । ख. °क्षोऽस्त्यधर्मनः प्र° । क. ग. °क्षोऽस्त्यधो मनः । प्र° । ८ घ. °षु मुक्ति° । ९ ख. सिद्धिस° । १० क.—ग. ङ. °वमन्त्रे । ११ ङ.—च. °मू । न जी° । १२ घ. °स्यसि ज्ञे° । १३ ग. ज्ञेये । १४ ख. प्रद° । १५ क. ख. विष्णुस्वा° । १६ घ. °स्यनित्य° । १७ क. ख. °तिमत्तम° । ग. च. °तिः । तम° । घ. °तिसंमतं—त° ।

तमद्भुतं बालकमम्बुजेक्षणं चतुर्भुजं शङ्खगदाद्युदायुधम् ।
( भा० द० पू० ३।९ )

इत्यादिपुराणलक्षणेन प्रमाणत्रयेण सिद्धं नृपश्चाननाङ्कं कथमसत्स्यादिति सदादीनि विशेषणानि गर्भश्रीकान्तमिश्रैर्विष्णुस्वामिचरणपरिणतान्तःकरणैः प्रतिपादितानि । तस्मादस्मदिष्टदेहनित्यत्वमत्यन्तादृष्टं न भवतीति पुरुषार्थकामुकैः पुरुषैरेष्टव्यम् । अत एवोक्तम्—

आयतनं विद्यानां मूलं धर्मार्थकाममोक्षाणाम् ।
श्रेयः परं किमन्यच्छरीरमजरामरं विहायैकम् ॥ इति ।

अजरामरीकरणसमर्थश्च रसेन्द्र एव । तदाह—

एकोऽसौ रसराजः शरीरमजरामरं कुरुते ॥ इति ।

किं वर्ण्यते रसस्य माहात्म्यम् । दर्शनस्पर्शनादिनाऽपि महत्फलं भवति । तदुक्तं रसार्णवे—

दर्शनात्स्पर्शनात्तस्य भक्षणात्स्मरणादपि ।
*पूजनाद्रसदानाच्च दृश्यते षड्विधं फलम् ॥
केदारादीनि लिङ्गानि पृथिव्यां यानि कानिचित् ।
तानि दृष्ट्वा तु यत्पुण्यं तत्पुण्यं रसदर्शनात् ॥ इत्यादिना ।

अन्यत्रापि—

काश्यादिसर्वलिङ्गेभ्यो रसलिङ्गार्चनाच्छिवः ।
प्राप्यते येन तल्लिङ्गं भोगारोग्यामृतपदम् ॥ इति ।

रसनिन्दायाः प्रत्यवायोऽपि दर्शितः—

प्रमादाद्रसनिन्दायाः श्रुतावेनं स्मरेत्सुधीः ।
द्राक्त्यजेन्निन्दकं नित्यं निन्दया पूरिताशुभम् ॥ इति ।

तस्मादस्मदुक्तया रीत्या दिव्यं देहं संपाद्य योगाभ्यासवशात्परतत्त्वे दृष्टे पुरुषार्थप्राप्तिर्भवति । तदा—

भ्रूयुगमध्यगतं यच्छिखिविद्युत्सूर्यवज्जगद्भासि ।
केषांचित्पुण्यदृशामुन्मीलति चिन्मयं ज्योतिः ॥

---

* घ. पु. टि. पूजनाद्धारणाच्चास्य ।

---

१ घ. °माणेन च सि° । २ ख. °कामैः पु° । ३ घ. °हत्पूजितज्योतिर्लिङ्गाभिवर्शमादि फं° । ४ क. ख. ग. °नि च । ५ घ. °ङ्गार्चना वरा । इति प्रा° । ६ क.—ग. ङ. च. °र्चनं शिवम् । इति । प्रा° । ७ च. तान्नित्यं बोधारो° । ८ क. °मृतामरम् । इ° । ९ क. ग. °न्दायां श्रु° । १० ख. घ. निरया° ।

परमानन्दैकरसं परमं ज्योतिःस्वभावमविकल्पम् ।
विगलितसकलक्लेशं ज्ञेयं शान्तं स्वसंवेद्यम् ॥
तस्मिन्नाधाय मनः स्फुरदखिलं चिन्मयं जगत्पश्यन् ।
उत्सन्नकर्मबन्धो ब्रह्मत्वमिहैव चाऽऽप्नोति ॥

( रसहृ० १ । २१–२३ )

श्रुतिश्च रसो वै सः । रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति ( तै० २–७–१ ) इति । तदित्थं भवदैन्यदुःखभैरतरणोपायो रस एवेति सिद्धम् । तथा च रसस्य परब्रह्मणा साम्यमिति प्रतिपादकः श्लोकः—

यः स्यात्मावरणाविमोचनधियां साध्यः प्रकृत्या पुनः
संपन्नः सह तेन दीव्यति परं वैश्वानरे जाग्रति ।
ज्ञातो यद्यपरं न वेदयति च स्वस्मात्स्वयं द्योतते
यो ब्रह्मैव स दैन्यसंसृतिभयात्पायादसौ पारदः ॥ इति ।

इति श्रीमत्सायणमाधवीये सर्वदर्शनसंग्रहे रसेश्वरदर्शनम् ॥

## अथौलूक्यदर्शनम् ॥ १० ॥

---

इह खलु निखिलप्रेक्षावान्निसर्गप्रतिकूलवेदनीयतया निखिलात्मसंवेदनसिद्धं दुःखं जिहासुस्तद्धानोपायं जिज्ञासुः परमेश्वरसाक्षात्कारमुपायमाकलयति ।

यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।
तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति ॥

इत्यादिवचननिचयप्रामाण्यात् । परमेश्वरसाक्षात्कारश्च श्रवणमननभावनाभिर्भावनीयः । यदाह—

आगमेनानुमानेन ध्यानाभ्यासबलेन च ।
त्रिधा विकल्पयन्प्रज्ञां लभते योगमुत्तमम् ॥ इति ।

तत्र मननमनुमानाधीनम् । अनुमानं च व्याप्तिज्ञानाधीनम् । व्याप्तिज्ञानं च पदार्थविवेकसापेक्षम् । अतः पदार्थषट्कम्—अथातो धर्मं व्याख्यास्यामः ( क० सू०

---

१ घ. °रमज्ये° । २ ख. स्वयं वे° । ३ क. ख. °बद्धो ब्र° । ४ ग. ङ.—च. भवेदन्य घ. भवे दै° । ख. भवेदन्यभवद्° । ५ घ. °भवत° । ६ ख. ङ.—च. °क्षावान्नि° । ७ घ. °या पर° । ८ क. ग. °द्धं जि° । ९ क. ग. घ. °हासतस्त° । ङ.—च. °हासुस्त° । १० क. ग. °सोः प° । ११ ङ.—च. °माकलति । ख. °माकर्णयति । १२ क. ग. °नीयम् । य° । १३ क. ग. °गमो ना° । १४ घ. °ल्पयेत्प्रज्ञां ।

१ । १ ] इत्यादिकायां दशलक्षण्यां कणभक्षेण भगवता व्यवस्थापितम् । तत्राऽऽह्निकद्वयात्मके प्रथमेऽध्याये समवेताशेषपदार्थकथनमकारि । तत्रापि प्रथमाह्निके जातिमन्निरूपणम् । द्वितीयाह्निके जातिविशेषयोर्निरूपणम् । आह्निकद्वययुक्ते द्वितीयेऽध्याये द्रव्यनिरूपणम् । तत्रापि प्रथमाह्निके भूतविशेषलक्षणम् । द्वितीये दिक्कालप्रतिपादनम् । आह्निकद्वययुक्ते तृतीय आत्मान्तःकरणलक्षणम् । तत्राप्यात्मलक्षणं प्रथमे । द्वितीयेऽन्तःकरणलक्षणम् । आह्निकद्वययुक्ते चतुर्थे शरीरतदुपयोगिविवेचनम् । तत्रापि प्रथमे तदुपयोगिविवेचनम् । द्वितीये शरीरविवेचनम् । आह्निकद्वयवति पञ्चमे कर्मप्रतिपादनम् । तत्रापि प्रथमे शरीरसंबन्धिकर्मचिन्तनम् । द्वितीये मानसकर्मचिन्तनम् । आह्निकद्वयशालिनि षष्ठे श्रौतधर्मनिरूपणम् । तत्रापि प्रथमे दानप्रतिग्रहधर्मविवेकः । द्वितीये चातुराश्रम्योचितधर्मनिरूपणम् । तथाविधे सप्तमे गुणसमवायप्रतिपादनम् । तत्रापि प्रथमे बुद्धिनिरपेक्षगुणप्रतिपादनम् । द्वितीये तत्सापेक्षगुणप्रतिपादनं समवायप्रतिपादनं च । अष्टमे निर्विकल्पकसविकल्पकप्रत्यक्षप्रमाणचिन्तनम् । नवमे बुद्धिविशेषप्रतिपादनम् । दशमेऽनुमानभेदप्रतिपादनम् ।

तत्रोद्देशो लक्षणं परीक्षा चेति त्रिविधाऽस्य शास्त्रस्य प्रवृत्तिः । ननु विभागापेक्षया चातुर्विध्ये वक्तव्ये कथं त्रैविध्यमुक्तमिति चेन्मैवं मंस्थाः । विभागस्य विशेषोद्देशरूपत्वादुद्देश एवान्तर्भावात् । तत्र द्रव्यगुणकर्मसामान्यविशेषसमवाया इति षडेव ते पदार्था इत्युद्देशः । किमत्र क्रमनियमे कारणम् । उच्यते—समस्तपदार्थायतनत्वेन प्रधानस्य द्रव्यस्य प्रथममुद्देशः । अनन्तरं गुणत्वोपाधिना सकलद्रव्यवृत्तेर्गुणस्य । तदनु सामान्यवत्त्वसाम्यात्कर्मणः । पश्चात्त्रितयाश्रितस्य सामान्यस्य । तदनन्तरं समवायाधिकरणस्य विशेषस्य । अन्तेऽवशिष्टस्य समवायस्येति ।

ननु षडेव पदार्था इति कथं कथ्यते । अभावस्यापि सद्भावादिति चेन्मैवं वोचः । नञर्थानुल्लिखितधीविषयतया भावरूपतया षडेवेति विवक्षितत्वात् । तथाऽपि कथं षडेवेति नियम उपपद्यते । विकल्पानुपपत्तेः । तथाऽपि—नियमव्यवच्छेद्यं प्रमितं न वा । प्रमितत्वे कथं निषेधः । अप्रमितत्वे कथंतराम् । न हि

१ घ. ये भूतविशेषदिक्कालप्रतिपादनम् । त° । २ ङ. तथाऽपि । ३ घ. °साधारणक° । ४ क. ग. °नसादिक° । ५ क. ख. ग. °द्देशरूपत्वोद्देश° । ङ.—°द्देश ए° । च. °द्देशरूपत्वेनोद्देश ए° । ६ घ. ङ. °याभावा इ° । ७ क. °दार्थोपपतनत्वे° । ख. °दार्थायतत्वे° । ८ ख. °साधर्म्यात्क° । ९ क. ग.—च. °ति क्रमनियमः । न° । १० क. °चः । तत्रार्था° । घ. °चः । तत्रार्थोल्लि° । ११ ङ.—च. °या ष° ।

न्यदिच्छन्नन्यद्व्यवहरतीति व्याहन्येत तथा च यदीदंकारास्पदं रजतावभासगोचरतां नाऽऽचरेत्कथं रजतार्थी तदिच्छेत् । यद्यरजतत्वाग्रहणादिति ब्रूयादजतत्वाग्रहात्कस्मादयं नोपेक्षेतेति । युगपत्तद्भवभेदाग्रहाभेदाग्रहनिबन्धनाभ्यामुपादानोपेक्षाभ्यां पुरतः पृष्ठतश्चाकृष्यमाणः पुरुषो दोलायमानतया रूप्यारोपमन्तरेणोपादानपक्ष एव न व्यवस्थाप्यत इत्यनिच्छताऽप्यच्छमतिना समारोपः समाश्रयणीयः । यथाऽऽह भेदाग्रहादिदंकारास्पदे रजतत्वमारोप्य तज्जातीयस्योपकारहेतुभावमनुस्मृत्य तज्जातीयत्वेनास्यापि तदनुमाय तदर्थी प्रवर्तत इति प्रथमः पक्षः प्रशस्यः ।

न च तटस्थरजतस्मरणपक्षेऽपि हेतोर्गृहीतत्वेनायं मार्गः समान इति वाच्यम् । रजतत्वस्य हेतोः पक्षधर्मत्वाभावात् । न च पक्षधर्मताया अभावेऽपि व्याप्तिबलाद्गमकत्वं शङ्क्यम् । व्याप्तिपक्षधर्मतावल्लिङ्गस्यैव गमकत्वाङ्गीकारात् । तदाहुः शबरस्वामिनः—ज्ञातसंबन्धस्यैव पुंसो लिङ्गविशिष्टधर्म्येकदेशदर्शनाल्लिङ्गिविशिष्टधर्म्येकदेशबुद्धिरनुमानमिति । आचार्योऽप्यवोचत्—

> स एष चोभयात्मा यो गम्ये गमक इष्यते ।
> असिद्धेनैकदेशेन गम्यासिद्धेर्न बोधकः ॥ इति ।

ननु भवत्पक्षेऽपि पुरःस्थितस्येदमर्थस्य परमार्थतो रजतत्वं नास्तीति न रजतत्वं धर्म्येकदेश इति चेन्न । यक्षानुरूपो बलिरिति न्यायेनानुमित्याभासानुगुणस्यैकदेशस्य विद्यमानत्वात् । तथा च प्रयोगः—विवादाध्यासितं रजतज्ञानं पुरोवर्तिविषयं रजतार्थिनस्तत्र नियमेन प्रवर्तकत्वात् । यदुक्तसाधनं तदुक्तसाध्यं यथोभयवादिसंमतं सत्यरजतज्ञानम् । विवादपदं शुक्तिशकलं रजतज्ञानविषयोऽव्यवधानेन रजतार्थिप्रवृत्तिविषयत्वाद्रजतपदसमानाधिकरणपदान्तरवाच्यत्वाद्वा वस्तुरजतवत् ।

यदुक्तं रजतज्ञानस्य शुक्तिकालम्बनत्वेऽनुभवविरोध इति तदप्ययुक्तम् । विकल्पासहत्वात् । तथाहि—तत्र किं रजताकारप्रतीतिं प्रति शुक्तेरालम्बनत्वेऽनुभवविरोध उद्भाव्यत इदमंशस्य वा । नाऽऽद्यः । अनङ्गीकारपराहतत्वात् । न द्वितीयः । इदंतानियतदेशाधिकरणस्य चाकचक्यविशिष्टस्य वस्तुनो रजतज्ञानालम्बनत्वमनवलम्बमानस्य भवत एवानुभवविरोधात् । इदं रजतमिति सामानाधिकरण्येन पुरोवर्तिन्यङ्गुलिनिर्देशपूर्वकमुपादानादिव्यवहारदर्शनाच्च ।

---

१ ख. °दिच्छेदन्य° । २ क.–°ताभा° । ३ ख. °ग्रहणात्क° । ४ ख. °गतद्भ° । ५ ख. °णीयस्तथाहि भे° । ६ क. °पि धर्महेत्वोर्गृ° । ख. °पि हेत्वागृही° । ७ ख. शक्यशङ्कम् व्या° । ८ ख. स एव चो° । ९ ख. °पदं स° ।

यच्चोक्तं—दोषाणामौत्सर्गिककार्यप्रसवशक्तिप्रतिबन्धकतया विपरीतकारित्वं नास्तीति । तदप्ययुक्तम् । दावदग्धवेत्रबीजादौ तथा दर्शनात् । न च दग्धस्य वेत्रबीजत्वं नास्तीति मन्तव्यम् । श्यामस्य घटस्य रक्ततामात्रेण घटत्वनिवृत्तिप्रसङ्गात् । ननु घटोऽयं घटोऽयमित्यनुवृत्तयोः प्रत्ययप्रयोगयोः सद्भावाद्घटत्वस्य सद्भाव इति चेन्न । अत्रापीदं वेत्रबीजामिति तयोः समानत्वात् । तथा भस्मकदोषदूषितस्य जाठराग्नेर्बह्वन्नपचनसामर्थ्यं दृश्यते न च बह्वन्नपचनसामर्थ्यं जाठरस्यैव जातवेदसो न भस्मकव्याधेरिति वक्तुं युक्तम् । तस्य मन्दमल्पपचनसामर्थ्येऽपि सहसा महत्पचनस्य भस्मकव्याधिसाहायकमन्तरेणानुपपत्तेः । अन्यथा सर्वेषां तथाऽऽपत्तेः । किंच ज्ञानानां यथार्थव्यवहारकारणत्वेऽपि दोषवशादयथार्थव्यवहारकारणत्वमङ्गीकुर्वाणो भवानेव पर्यनुयोज्यो भवति । तदुक्तं भाष्ये—यश्चोभयोः समानो दोषो द्योतते तत्र कश्चोद्यो भवतीति । अत्राप्युक्तम्—

> यश्चोभयोः समो दोषः परिहारोऽपि वा समः ।
> नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे ॥ इति ।

तथाऽपि मामकस्यानुमानस्य किं दूषणं दत्तमासीत् । यद्यनुमानदूषणं विना न परितुष्यति हन्त कालात्ययापदिष्टता । कृष्णवर्त्मानुष्णत्वानुमानवत् । एतावन्तं कालं यदिदं रजतमित्यभादसौ शुक्तिरिति प्रत्यक्षेण प्राचीनप्रत्ययस्यायथार्थत्वं प्रवेदयता यथार्थत्वानुमानस्यापहृतविषयत्वाद्बाध्यत्वसंभवात् ।

यच्चोक्तं स्वगोचरव्यभिचारे सर्वानाश्वासप्रसङ्ग इति । तदसांप्रतम् । संविदां क्वचित्संवादिव्यवहारजनकत्वेऽपि न सर्वत्र तच्छङ्कया प्रवृत्त्युच्छेद इति यथा तावके मते तथा मामकेऽप्यसौ पन्था न वारित इति समानयोगक्षेमत्वात् । तौतातितमतमवलम्ब्य विधिविवेकं व्याकुर्वाणैराचार्यवाचस्पतिमिश्रैर्बोधकत्वेन स्वतः प्रामाण्यं नाव्यभिचारेणेति न्यायकणिकायां प्रत्यपादि । तस्मादविश्वासशङ्काऽनवकाशं लभते ।

ननु माध्यमिकमतावलम्बनेन रजतादिविभ्रमालम्बनमसदिति चेत्तदयुक्तम् । असतोऽपरोक्षप्रतिभासायोग्यत्वात् । तदुपादित्सया प्रवृत्त्यनुपपत्तेश्च । ननु विज्ञानमेव वासनादिस्वकारणसामर्थ्यासादितदृष्टान्तसिद्धस्वभावविशेषमसत्प्रकाशनसमर्थमुपजातम् । असत्प्रकाशनशक्तिरविद्या संवृतिरिति पर्यायाः । तस्मादविद्यावशादसन्तो भान्तीति चेत्तदपि वक्तुमशक्यम् । शक्यस्य दुर्निरूप्यत्वात् ।

१ ख. °था तथाऽऽप° । २ क. °नानाप्रज्ञानतो य° । ख. °नानाप्रज्ञानाद्यथा° ३ ख. °ङ्क° । ४ ख. °सङ्गयति । ५ ख. °चेत्सन्नादि° । ६ ख. °दिताद्द° । ७ ख. भान्तीति ।

किमत्र शक्यं कार्यं ज्ञाप्यं वा। नाऽऽद्यः। असतः कार्यत्वानुपपत्तेः। न द्वितीयः। शक्यस्य कारणत्वेनाङ्गीकृतत्वात्। ज्ञानादन्यस्य ज्ञानस्यानुपलब्धेश्च। उपलब्धौ वा तस्यापि ज्ञाप्यत्वेन ज्ञापकान्तरापेक्षायामनवस्थापत्तेश्च। अथैतद्दोषपरिजिहीर्षया विज्ञानं सद्रूपमेवासतः प्रकाशकमिति कक्षी क्रियत इति चेदत्र देवानांप्रियः प्रष्टव्यः पुनः। असौ सदसतोः संबन्धो निरूप्यनिरूपकभावोऽविनाभावो वा। नाऽऽद्यः। असत उपकाराधारत्वायोगेनानुपकृततया निरूप्यत्वानुपपत्तेः। न चरमः। धूमधूमध्वजयोरिव तदुत्पत्तिलक्षणस्य शिंशपावृक्षयोरिव तादात्म्यलक्षणस्य वाऽविनाभावनिदानस्य सदसतोरसंभवात्। तस्माद्विज्ञानमेवासत्प्रकाशकमित्यसद्वादिनायमसत्प्रलाप इत्यारोप्यमाणं नासत्।

ननु विज्ञानवादिनयानुसारेण प्रतीयमानं रजतं ज्ञानात्मकम्। तत्र च युक्तिरभिधीयते—यद्यथाऽनुभूयते तत्तथा। अन्यथात्वं तु बलवद्बाधकोपनिपातादास्थीयत इत्युभयवादिसंमतोऽर्थः। तत्र च नेदं रजतमिति निषिद्धेदंभावं रजतमर्थादान्तरज्ञानरूपमवतिष्ठते। न चेदंतया निषेधे सत्यनिदंतया च बहिरपि व्यवस्थोपपत्तेः कुतः संविदाकारतेति वाच्यम्। व्यवहितस्यापरोक्षत्वानुपपत्तावपरोक्षस्य विज्ञानस्य कक्षीकर्तव्यत्वात्। तथा च प्रयोगः—विवादपदं विज्ञानाकारः संप्रयोगमन्तरेणापरोक्षत्वाद्विज्ञानवदिति। तदनुपपन्नम्। विकल्पासहत्वात्। बाधकोऽवबोधः किं साक्षाज्ज्ञानाकारतां बोधयत्यर्थाद्वा। नाऽऽद्यः। नेदं रजतमिति प्रत्ययस्य रजतविवेकमात्रगोचरस्य ज्ञानाभेदगोचरतायामनुभवविरोधात्। नेदं रजतमिति रजतस्य पुरोवर्तित्वप्रतिषेधो ज्ञानाकारतां कल्पयतीति चेत्तदेतद्वार्तम्। प्रसक्तप्रतिषेधात्मनो बाधकावबोधस्य तत्रैव सत्त्वात्प्रतिषेधोपपत्तेः। विज्ञानाकारत्वसाधनमप्यविज्ञानाकारे बहिष्ठे साक्षिप्रत्यक्षे भावरूपाज्ञाने वर्तत इति सव्यभिचारः।

ननु अन्यथाख्यातिवादिमतानुसारेण रजतस्य देशान्तरसत्त्वेन भाव्यम्। अन्यथा तस्य प्रतिषेधप्रतियोगित्वानुपपत्तेः। न हि कश्चित्प्रेक्षावाञ्शशविषाणं प्रतिषेद्धुं प्रभवति। तदुक्तम्—

> व्यावर्त्याभाववत्तैव भाविकी हि विशेष्यता।
>
> अभावविरहात्मत्वं वस्तुनः प्रतियोगिता॥ (न्या० कु० ३।२) इति।

तथा च तस्य देशान्तरसत्त्वमाश्रयणीयमिति चेत्तदपि न प्रमाणपद्धतिमध्यास्ते। असतः संसर्गस्येव कलधौतस्य निषेधप्रतियोगित्वोपपत्तेः।

---

१ क. ॰ज्ञानरू॰। ख. ॰ज्ञानस्वरूप॰। २ क.—॰तिम॰।

नन्विदं रजतमिति ज्ञानमेकमनेकं वा। न तावदाद्यः। अपसिद्धान्तापत्तेरसंभवाच्च। तथाहि—शुक्तीदमंशेन्द्रियसंप्रयोगादिदमाकारान्तःपरिणामरूपमेकं ज्ञानं जायते। न च तत्र कलधौतं विषयभावमाकल्पयितुमुत्सहते। असंप्रयुक्तत्वात्तस्य। विषयत्वाङ्गीकारे सर्वज्ञत्वापत्तेः। न च चक्षुरन्वयव्यतिरेकानुविधायितया तज्ज्ञानस्य तज्जन्यत्वं वाच्यम्। इदमंशज्ञानोत्पत्तौ तदुपक्षयोपपत्तेः। न चापि संस्काराद्रजतज्ञानस्य जन्म। स्मृतित्वापत्तेः। अथेन्द्रियदोषस्य तत्करणत्वम्। तदप्ययुक्तम्। स्वातन्त्र्येण तस्य ज्ञानहेतुत्वानुपपत्तेः। न हि ग्रहणस्मरणाभ्यामन्यः प्रकारः समस्ति। तस्मादिदमंशरजततादात्म्यविषयमेकं विज्ञानं न घटते। नाप्यनेकमख्यातिमतापत्तेरिति चेदुच्यते—

प्रथमं दोषकलुषितेन चक्षुषेदंतामात्रविषयान्तःकरणवृत्तिरुत्पद्यते। अनन्तरं तया वृत्त्या चैतन्यावरणाभिभवे सति तच्चैतन्यमभिव्यज्यते। पश्चादिदमंशचैतन्यनिष्ठाऽविद्या रागादिदोषकलुषिता कलधौताकारेण परिणमते। इदमाकारान्तःकरणपरिणामावच्छिन्नचैतन्यनिष्ठा कलधौतगोचरपरिणामसंस्कारसचिवा कलधौतज्ञानाभासाकारेण परिणमते। तौ च रजतवृत्तिपरिणामौ स्वाधिष्ठानेन साक्षिचैतन्येनाव्यवधानेन भास्येते। तथा च सवृत्तिकाया अविद्यायाः साक्षिभास्यत्वाभ्युपगमे वृत्त्यन्तरवेद्यत्वाभावान्नानवस्था। यद्यप्यन्तःकरणवृत्तिरविद्यावृत्तिश्चेति द्वे इमे ज्ञाने तथाऽपि विषयाधीनं फलम्। ज्ञातो घट इति विषयावच्छिन्नतया फलप्रतीतेः। तद्विषयश्च सत्यमिथ्याभूतयोरिदमंशरजतांशयोरन्योन्यात्मकतयैकत्वमापन्नः। तस्माद्विषयावच्छिन्नफलस्याप्येकत्वाज्ज्ञानैक्यमुपचर्यते। तदुक्तम्—

शुक्तीदमंशचैतन्यस्थिताऽविद्या विजृम्भते।
रागादिदोषसंस्कारसचिवा रजतात्मना॥
इदमाकारवृत्त्युक्तचैतन्यस्था तथाविधा।
विवर्तते तद्रजतज्ञानाभासात्मनाऽप्यसौ॥
सत्यमिथ्यात्मनोरैक्यादेकत्वाद्विषयो मतः।
तदायत्तफलैकत्वाज्ज्ञानैक्यमुपचर्यते॥ इति।

पञ्चपादिकायामपि फलैक्याज्ज्ञानैक्यमुपचर्यत इत्यभिप्रायेण सा चैकमेव ज्ञानमेकफलं जनयतीत्युक्तम्।

---

१ ख. °च्च शु°। २ ख. °रूपात्मकं। ३ ख. चक्षु°। ४ ख. तदपेक्षाया उप°। ५ ख. °स्याविम°।

ननु शुक्तिकामस्तके भाव्यमानस्य कलधौतस्य तत्रैव सत्यत्वाभ्युपगमे नेदं रजतमिति निषेधः कथं प्रभवेदिति चेन्न । प्रातिभासिकसत्यत्वेऽपि व्यावहारिकसत्यत्वाभावेन प्रतिपन्नोपाधौ प्रतियोगित्वसंभवात् । तदुक्तं पञ्चपादिकाविवरणे—त्रिविधं सत्त्वम् । परमार्थसत्त्वं ब्रह्मणः । अर्थक्रियासामर्थ्यं सत्त्वं मायोपाधिकमाकाशादेः । अविद्योपाधिकं सत्त्वं रजतादेरिति । अन्यत्राप्युक्तम्—

कालत्रये ज्ञातृकाले प्रतीतिसमये तथा ।
बाधाभावात्पदार्थानां सत्त्वत्रैविध्यमिष्यते ।
तात्त्विकं ब्रह्मणः सत्त्वं व्योमादेर्व्यावहारिकम् ॥
रूप्यादेरर्थजातस्य प्रातिभासिकमिष्यते ॥ इति ।
लौकिकेन प्रमाणेन यद्बाध्यं लौकिकेऽवधौ ।
तत्प्रातिभासिकं सत्त्वं बाध्यं सत्येव मातरि ॥
वैदिकेन प्रमाणेन यद्बाध्यं वैदिकेऽवधौ ।
तद्व्यावहारिकं सत्त्वं बाध्यं मात्रा सहैव तत् ॥ इति च ।

ततः ख्यातिबाधान्यथानुपपत्त्या भ्रान्तिगोचरस्य मायामयस्य रजतादेः सदसद्विलक्षणत्वलक्षणमनिर्वचनीयत्वं सिद्धम् । तमवोचच्चित्सुखाचार्यः—

प्रत्येकं सदसत्त्वाभ्यां विचारपदवीं न यत् ।
गाहते तदनिर्वाच्यमाहुर्वेदान्तवादिनः ॥ (चित्सु० पृ० ७९) इति ।

ननु मायाविद्ययोः स्वाश्रयव्यामोहहेतुत्वतदभावाभ्यां भेदस्य जागरूकत्वेनाविद्यामयत्वे वक्तव्ये मायामयत्वोक्तिरारोप्यस्यायुक्तेति चेत्तदयुक्तम् । अनिर्वचनीयत्वतत्त्वाभासप्रतिबन्धकत्वादिलक्षणजातस्य मायाविद्ययोः समानत्वात् । किंचाऽऽश्रयशब्देन द्रष्टोच्यते कर्ता वा । नाऽऽद्यः । मन्त्रौषधादिनिमित्तमायादर्शिनस्तस्य व्यामोहदर्शनात् । न द्वितीयः । विष्णोः स्वाश्रितमाययैव रामावतारे मोहितत्वेन तत्र मायावित्वस्याप्रयोजकत्वात् । बाधनिश्चयमन्त्रादिप्रतीकारबोधयोरेव प्रयोजकत्वात् । अपरथा पङ्ग्वन्धवत्कर्ताऽपि व्यामुह्येत । न चेच्छानुविधानाननुविधानाभ्यां तयोर्भेद इति भणितव्यम् । मायास्थले मणिमन्त्रौषधादिप्रयोगवदविद्यास्थलेऽपि द्विचन्द्रकेशोण्डुकादिविभ्रमनिमित्ताङ्गुल्यवष्टम्भादावपि स्वातन्त्र्योपलम्भात् । अत एव तत्र तत्र श्रुतिस्मृतिभाष्यादिषु मायाविद्ययोरभेदेन व्यवहारः संगच्छते । क्वचिद्विक्षेपप्राधान्येनाऽऽवरणप्राधान्येन च मायाविद्ययोर्भेदे तद्व्यवहारो न विरुध्यते । तदुक्तम्—

---

१ ख. तदैव । २ ख. °णम° । ३ ख. °कत्वविल° । ४ क.—तिसूत्रभा° ।

मोया विक्षिपदज्ञानमीशेच्छावशवर्ति वा ।
अविद्याच्छादयत्तत्त्वं स्वातन्त्र्यानुविधायि वा ॥ इति ।

नन्वविद्यासद्भावे किं प्रमाणम् । अहमज्ञो मामन्यं न जानामीति प्रत्यक्षप्रतिभास एव । ननु ज्ञानाभावविषयोऽयं माभिप्रेतमर्थं गमयतीति चेन्न तावदनुपलब्धिवादिनश्चोद्यमेतत् । परोक्षप्रतिभासहेतुत्वाचस्या: । अयमपि परोक्षप्रतिभास एवेति चेन्न तावल्लिङ्गशब्दानुपपद्यमानार्थजन्य: । ज्ञातकरणत्वात्तेषाम् । न चैतत्सामग्रीकाले ज्ञानमस्ति । अनुभूयते वा । अनुपलब्ध्या जन्यत इति चेन्न तावदियमज्ञाता करणम् । प्रत्यक्षेतरस्य ज्ञातकरणत्वनियमात् । नापि ज्ञातैव करणम् । अनुपलब्ध्यनवस्थानात् । न च यथा परेषामभावग्रहणे योग्यानुपलब्धि: सहकारिणी तथा न: करणमिति शङ्क्यम् । ज्ञानकरण इव सहकारिणि ज्ञातत्वनियमाभावात् । अस्तु वा तथा ज्ञेयाभावग्रहणे करणम् ज्ञानाभावग्रहणे करणं न भवत्येवेति वक्ष्यते ।

प्रत्यक्षाभाववादे तु प्रत्यक्षेण तावद्धर्मिप्रतियोगिज्ञानयो: सतोरात्मनि ज्ञानमात्राभावग्रहणं न भूयात् । घटवति भूतले घटाभावस्येव ज्ञानमात्राभावस्य ग्रहीतुमशक्यत्वात् । तयोरसतोस्तु सुतराम् । कारणाभावात् । अतोऽपि योग्यानुपलब्ध्या वा फललिङ्गाद्यभावेन वाऽऽत्मनि ज्ञानमात्राभावग्रहणं दुर्लभमिति परमतेऽप्ययं न्याय: समान: । तदेवमात्मनि प्रत्यक्षेण वाऽन्येन वा ज्ञानमात्राभावस्य ग्रहणमशक्यमिति स्थितम् ।

ननु ज्ञानविशेषाभाव: प्रत्यक्षेण गृह्यताम् । न तावत्स्मरणाभाव: । अभावग्रहणे प्रतियोगिग्रहणस्य कारणत्वात् । नाप्यनुभवाभाव: । तस्यावर्जनीयत्वात् । नन्वात्मनि घटानुभवाभाव: प्रत्यक्षविषयस्तर्ह्यहमज्ञ इति ज्ञानसामान्यवचनो जानातिर्ज्ञानविशेषेऽनुभवे लक्षणया वर्तन्ताम् । लक्षणा च संबन्धेऽनुपपत्तौ च सत्यां वर्तते । संबन्धस्तावदनुभवत्वज्ञानत्वयोरेकव्यक्तिसमावेशो व्याप्यव्यापकभावो वा विद्यत एव । अनुपपत्तिं तु न पश्याम: । नन्वनुभवाभावे प्रत्यक्षस्य प्रमेयलाभस्तेनैव तस्यार्थवत्ता सिध्यति । सत्यम् । प्रयोजनमेतन्नानुपपत्ति: । अन्योन्याश्रयात् । नन्वहमज्ञ इत्यत्र नञ्, आत्मनि ज्ञानमात्राभावं

१ ख. मामाचिक्षिपति ज्ञा° । २ ख. °मयेदिति । ३ ख. °महारम्र° । ४ °था क° । ५ ख. °तत्त्वं नेमा° । ६ ख. °वदिति । ७ ख. °त्रावभा° । ८ क-°ज्ञाभा° । ९ ख. °त्रावभा° । १० ख. °गिस्मरण° । ११ ख. °चने ज्ञाना° । १२ ख. °शषानु° । १३ ख. °नीयक° । १४ ख. °श्यामय न° । १५ ख. °क्षप्र° । १६ ख. °पत्तेरन्यो° ।

न भूते । ज्ञानवति तस्मिंस्तदभावात् । नाप्यनुभवाभावम् । ज्ञानोक्तेस्तदनभिधायकत्वात् । नैरर्थक्यं च न युक्तमित्यनयैवानुपपत्त्या लक्षणेति चेदुक्तलक्षणैवाविद्या तदर्थोऽस्तु । संदेह इति चेन्न । असमत्वात्कोटिद्वयस्य । अन्यत्र हि प्रतियोगिनिवृत्तिर्नञर्थः । अत्र तु प्रतियोगिव्याप्यनिवृत्तिरिति । जानातिसमभिव्याहृतस्य नञः क्वचिदुक्तलक्षणाविद्याविषयत्वसिद्धिमन्तरेण न संदेह इत्यपर्यवसानेन सैव जानातिसमभिव्याहृतस्य नञः सर्वत्र तद्विषयत्वमवगमयति विलुम्पति ज्ञानाभावकोट्यन्तरामिति क्व संदेहावकाशः । तदेवं लक्षणाहेत्वभावेऽनुभवाभावोऽप्यात्मनि न प्रत्यक्षेण गृह्यत इति परिशेषादुक्तलक्षणाऽविद्यैवाज्ञ इति प्रतिभासस्य विषय इति स्थितम् ।

अस्तु वा ज्ञानाभावप्रतिभासः । अयमभावश्च प्रतियोगी यत्र निषिध्यते न ततस्तत्त्वान्तरमन्यदाधिकरणभावात् । मा भूदन्यभावत्वमन्याभावत्वं तु स्यात् । ननु तदपि विरुद्धम् । सत्यं सति भेदे । स च प्रमाणात् । तच्च सति प्रतियोग्यभावाधिकरणतत्त्वान्तरे । ननु घटवति भूतले घटाभावमितिव्यवहृती स्यातामिति चेन्मा भूतामेते प्रतियोगिना सहानुभूयमानेऽधिकरणे । प्रतियोगिस्मरणे सत्यनुभूयमानेऽधिकरणे तु स्याताम् । एवमप्युपपत्तौ न तत्त्वान्तरविषयत्वं कल्प्यम् । काऽनुपपत्तिरिति चेद्बाधकाभावस्तावदुक्त एव । बाधकं तु कल्पनागौरवमेव । तथाहि—तत्त्वान्तरत्वं तावदेकं कल्प्यम् । तस्यापरोक्षत्वायेन्द्रियसंनिकर्षः कल्प्यः । स च संयोगादिर्न भवतीति संयुक्तविशेषणत्वादिः कल्प्य इत्यतो वरमुक्तलक्षणस्याधिकरणस्य व्यवहारविषयेऽङ्गीकारः । सति चैवं ज्ञानाभावेनापि प्रतियोगिस्मृतौ सत्यामनुभूयमानमधिकरणं ज्ञातव । स च न केवलमन्तःकरणम् । जडत्वात् । नापि केवल आत्मैव । अपरिणामित्वादगुणत्वाच्च । अत उभयोरभेदाध्यासः । आत्माध्यासश्चोक्तलक्षणाऽविद्याऽऽत्मेत्यायातमविद्यायामेवाहमज्ञ इति प्रतिभासः प्रमाणमिति ।

अनुमानं च—विवादपदं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकमप्रकाशितार्थप्रकाशकत्वात् । अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावदिति । वस्तुपूर्वकमित्युक्त आत्मवस्तुपूर्वकत्वेनार्थान्तरता ।

१ ख. °तस्तदाभा° । २ ख. °निवर्त्या नार्थः । ३ ख. °निवर्त्योऽनर्थ इति । ४ ख. °इयं भवति सै° । ५ ख. °स्य नञि त° । ६ ख. °देव ल° । ७ ख. °दवि° । ८ ख. सत्त्वं । ९ ख. °वात्स्वावि° । १० ख. °न्तरत्वेनास्य । घ° । ११ ख. °प्युत्पत्तौ नत्वान्त° । १२ ख. °शेषेण° । १३ ख. °षयाङ्गीकारः सति ज्ञा° । १४ ख. सत्वान° । १५ ख. सात्माध्या° । १६ ख. °लि वाऽनु° । १७ ख. °देशं ग°

तदर्थं वस्त्वन्तरेति । तथाऽपि विषयभूते वस्त्वन्तरेऽर्थान्तरता । तदर्थं स्वदेश[1]गतेति । अदृष्टादिकं प्रत्यादेष्टुं स्वनिवर्त्येति । उत्तरज्ञाननिवर्त्यं प्रथमज्ञानं निवर्तयितुं स्वविषयावरणेति । प्रागभावं प्रतिक्षेप्तुं स्वप्रागभावव्यतिरिक्ते[2]ति । स्वप्रागभावव्यतिरिक्तपूर्वकमित्युक्ते विषयेणार्थान्तरता । तदर्थं विषयावरणेति । तादृशमन्धकारं व्यासेद्धुं स्वनिवर्त्येति । विषयगतामज्ञाततां निराकर्तुं स्वदेशगतेति । मिथ्याज्ञानमपोहितुं वस्त्वन्तरेति । धारावाहिकविज्ञाने व्यभिचारं व्यासेद्धुमप्रकाशितेति । मध्यवर्तिप्रदीपप्रभायां साध्यसाधनवैधुर्यप्रतिरोधाय प्रथमोत्पन्नविशेषणम् । सौरालोकव्याप्तदेशस्थप्रदीपप्रभाप्रतिक्षेपायान्धकारेति न च ज्ञानसाधके प्रमाणे व्यभिचारः शङ्कनीयः । विप्रतिपन्नं प्रत्यसत्त्वनिवृत्तिमात्रस्य प्रमाणै[3]कृत्यत्वात् । तदुक्तं देवताधिकरणे कल्पतरुकारैः–अनुमानादिभिरसत्त्वनिवृत्तिः क्रियत इति । ननु साधनविकलो दृष्टान्त इति चेन्न । प्रकाशशब्देन तमोविरोध्याकारस्य विवक्षितत्वात् । तदुक्तं विवरणविवरणे सहजसर्वज्ञविष्णुभ[4]ट्टोपाध्यायैः–न चात्र पक्षदृष्टान्तयोरेकप्रकाशरूपानन्वयः शङ्कनीयः । तमोविरोध्याकारो हि प्रकाशश[5]ब्दवाच्यः । तेनाऽऽकारेणैक्यमुभयत्रास्तीति । नै[6]रेन्द्रगिरिश्रीचरणैस्त्वित्थमुक्तम्–अप्रकाशितं[7] प्रकाशव्यवहारहेतुत्वं हे[8]त्वर्थः । तस्य चोभयत्रानुगतत्वान्नासिद्ध्यादिरिति ।

श्रुते[9]श्च । भूयश्चान्ते विश्वमायानिवृत्तिः ( श्वे० १ । १० इत्यादिका श्रुतिः ।

तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते ।

योगी मायाममेयाय तस्मै विद्यात्मने नमः ॥ इति च ।

एतेनै[10]तत्प्रत्युक्तं यदुक्तं भास्करेण—क्षपणकचरणं प्रमाणशरणे भेदाभेदवादिनां भावरूपमज्ञानं नास्ति किंतु ज्ञानाभाव इति । तथा च भास्कारप्रणीतशारीरकमीमांसाभाष्यग्रन्थः–यदेव पररूपादर्शनं[11] सैवाविद्येति । भावरूपाज्ञानानभ्युपगमे जीवेश्वरादिविभागानुपपत्तेः । न च भाविकः परमात्मनोंऽशो जीव इति वाच्यम् । निष्कलं ‘ निष्क्रियं शा[12]न्तं निरवद्यं निरञ्जनम् ’ ( श्वे० ६ । १९ )’इत्यादिश्रुतिविरोधात् ।

केचन शाक्ताः–शक्तिं मायाशब्दार्थभूतां जगत्कारणत्वेनाङ्गीकृतां सत्यामभ्युपेत्य मातुलिङ्गगदाखेटविधारिणी महालक्ष्मीस्तस्याः प्रथमावतार इति

---

१ ख. °गत इति । २ क.—°ति । प्रा° । ३ क.—°णतत्वा° । ४ ख. °भक्तोपा° । ५ ख. °शब्दो वाच्यते साका° । ६ ख. °रेन्द्रागि° । ७ ख. °तव्य° । ८ ख. °त्वर्थोऽस्य । ९ ख. °श्रुतिश्च° । त° । १० ख. °क्तं भा° । ११ ख. °नं नैवा । १२ शान्तम् । इ° ।

वर्णयन्ति । सा च कालरात्रिः सरस्वतीति द्वे शक्ती उत्पाद्य ब्रह्माणं पुरुषं श्रियं च स्त्रियमुत्पादयामास । स्वयं मिथुनं जनयित्वा स्वसुते अप्याह—अहमिव युवामपि मिथुनमुत्पादयतमिति । ततः कालरात्रिर्महादेवं पुरुषं स्वरां स्त्रियं च जनयामास । सरस्वती च विष्णुं पुरुषं गौरीं च स्त्रियमुदपादयत् । ततश्चाऽऽदि-विवाहमकरोदकारयच्च । एवं ब्रह्मणे स्वरां विष्णवे श्रियं शिवाय गौरीं दत्त्वा शक्तियुक्तानां तेषां सृष्टिस्थितिसंहाराख्यानि कर्माणि प्रत्यपादयदिति । तदेतन्मतं श्रुत्यादिमूलप्रमाणविधुरतया स्वोत्प्रेक्षामात्रपरिकल्पितमिति स्वरूपाख्यैव नि-राक्रियेत्युपेक्षणीयम् । ततश्चानिर्वचनीयानाद्यविद्यालसितः प्रत्यगात्मनि प्रतीय-मानः प्रमातृत्वादिप्रपञ्चः इत्यलमतिप्रसङ्गेन ।

ननु किमर्थं प्रमातृत्वादीनामाविद्यकत्वं निगद्यते। ब्रह्मज्ञानेन निवर्तनाय जीवस्य ब्रह्मभावाय वा । न प्रथमः । शास्त्रप्रामाण्यादेव सत्यस्यापि ज्ञानेन निवृत्ते-रुपपत्तेः । उपलम्भाच्च । तथाहि—

सेतुं दृष्ट्वा विमुच्येत ब्रह्महा ब्रह्महत्यया ।

इत्यादिना पापं सनीस्रस्यते । विषयदोषदर्शनेन रागो दंदह्यते । तार्क्ष्यध्यानेन विषं शम्यते । एवं कर्तृत्वादिबन्धः पारमार्थिकोऽपि तत्त्वज्ञानेन निवर्त्येत । न चरमः । औपाधिकस्य जीवभावस्योपाधिनिवृत्त्या निवृत्तौ ब्रह्मभावसंभवात् । तस्माद्बन्धस्याऽऽविद्यकत्ववाचोयुक्तिः सावद्येति चेन्नैतदनवद्यम् । सत्यस्याऽऽत्म-वज्ज्ञाननिवर्त्यत्वानुपपत्तेः । बन्धस्य मिथ्यात्वमन्तरेण शास्त्रप्रामाण्यादपि तद-सिद्धेश्च । शास्त्रमपि—

लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधकः ।

इति न्यायेन लोकावलोकितां पदशक्तिं पदार्थयोग्यतां चोररीकृत्य प्रचरतीति । अपरथा, 'आदित्यो यूपः' ( तै०ब्रा०२।१।५) 'यजमानः प्रस्तरः' (तै०सं० १।७।४)इत्यादिवाक्यस्तोमस्य यथाश्रुतेऽर्थे प्रामाण्यापत्तेः। वैदिक्याः क्रियायाः समक्षक्षायितया पारत्रिकफलकरणत्वान्यथानुपपत्त्याऽपूर्वाङ्गीकरणानुपपत्तिश्च । लोके च शुक्तिव्यक्तितत्त्वाभिव्यक्तावपनीयमानस्याऽऽरोपितस्य मिथ्यात्वदृष्टेः तद्दृष्टान्तावष्टम्भेनाऽऽत्मतत्त्वसाक्षात्काराविद्यापनोद्यस्याऽऽविद्यकस्य बन्धस्य मिथ्यात्वानुमानसंभवात् । विमतं मिथ्याऽधिष्ठानतत्त्वज्ञाननिवर्त्यत्वाच्छुक्ति-रूप्यवदिति । न च विमतं सत्यं भासमानत्वादिति प्रतिप्रयोगे समानबलतया

---

१ ख. °मुपपा° । २ ख. °पश्यतियौवनिराश्रिये° । ३ ख. प्रतिभासमानप्र° । ४ ख. प्रपञ्चेन । ५ ख. °ह्मभवना° । ६ ख. दह्यते । ७ ख. °स्तोम्या य° । ८ ख. °पत्तेश्च । ९ ख. °नाऽऽत्यन्तिक° ।

बाधप्रतिरोधः। प्रतिरोधभियाऽन्यतरदोषत्वसंभवादिति वदितव्यम्। मरुमरीचिकोदकादौ सव्यभिचारात्। अबाधितत्वेन विशेषणान्न दोष इति चेन्मैवं भाषिष्ठाः। विशेषणासिद्धेः। तत्रेदं भवान्पृष्टो व्याचष्टाम्। कतिपयपुरुषकतिपयकालाबाधितत्वं हेतुविशेषणं क्रियते सर्वथा बाधवैधुर्यं वा। न प्रथमः।

यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः।
अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते॥ (वाक्यप० १।३४)

इति न्यायेन त्रिचतुरप्रतिपत्तृप्रतिपादितस्यापि प्रतिपत्त्रन्तरेण प्रकारान्तरमुररीकृत्य प्रतिपादनात्। नापि चरमः। सर्वथा बाधवैधुर्यस्यासर्वज्ञदुर्ज्ञेयत्वात्। यद्येवं हन्त तर्हि ज्ञानात्मनोऽपि सत्यत्वं नावगम्यत इति चेन्मैवं मंस्थाः। 'तत्सत्यं स आत्मा' (छा० ६।८।७) इत्यागमसंवादगतेः। न च प्रपञ्चेऽप्ययं न्याय इति मन्तव्यम्। तादृशस्याऽऽगमस्यानुपलम्भात्। प्रत्युताद्वितीयत्वं श्रावयन्त्याः श्रुतेः प्रपञ्चमिथ्यात्व एव पक्षपातात्। ननु कल्पनामात्रशरीरस्य पक्षसपक्षविपक्षादेः सर्वसुलभत्वेन जयपराजयव्यवस्थया कथं कथा प्रथेत। काऽत्र कथंता।

'एवं त्रिचतुरज्ञानजन्मनो नाधिका मतिः'। (श्लो० वा० १।१।२ सूत्रे) इति न्यायेन त्रिचतुरकक्ष्याविश्रान्तस्य सच्चदाभासलक्षणानालिङ्गितस्य दूषणभूषणादेस्तत्र कथाङ्गत्वाङ्गीकारात्। अत एवोक्तं खण्डनकारेण—व्यावहारिकीं प्रमाणसत्तामाकृष्य विचारारम्भः (ख० पृ० ४४) इति। न च भेदग्राहिभिः प्रमाणैरद्वैतश्रुतेर्जघन्यतेति शङ्क्यम्। ब्रह्मणि पारमार्थिकसत्यत्वेन तदावेदिकायास्तत्त्वावेदनलक्षणप्रामाण्यायाः श्रुतेर्व्यावहारिकप्रमाणभावानां प्रत्यक्षादीनां च विभिन्नविषयतया परस्परं बाध्यबाधकभावासंभवात्। तदप्युक्तं तेनैव—

तदद्वैतश्रुतेस्तावद्बाधे प्रत्यक्षमक्षमम्।
नानुमानादिकं कर्तुं तवापि क्षमते मते॥ (ख० १।२०)।
धीधना बाधनायास्यास्तदा प्रज्ञां प्रयच्छथ।
क्षेप्तुं चिन्तामणिं पाणिलब्धमब्धौ यदीच्छथ॥ (ख० १।२४)।

---

१ ख. °दोषितत्व°। २ ख. नापग°। ३ ख. न प्र°। ४ ख. °न्त्याश्रावयन्त्या श्रु°। ५ क.—°तुरोज्ञा°। ६ ख. °कामितिरि°। ७ ख. °श्रुतिर्जन्यत इति। ८ ख. तवे°। ९ ख. क्षादिना च। १० ख. तथाऽद्वै°। ११ ख. नाम मानादिकं क°। १२ ख. ते। साध°।

तस्मात्तत्त्वज्ञानेन निवर्तनायास्य बन्धस्याज्ञानकल्पितत्वमङ्गीकर्तव्यम् । यत उक्तम्——यतो ज्ञानमज्ञानस्य निवर्तकमिति ।

यदुक्तं——सत्यस्यापि दुरितस्य सेतुदर्शनेन निवृत्तिरुपलभ्यत इति । तदयुक्तम् । विहितक्रियानुष्ठानेन जनितस्य धर्मस्याधर्मनिवर्तकत्वध्रौव्यात् । 'धर्मेण पापमपनुदति' ( म० ना० २२ । १ ) इति श्रुतेः । प्रमाणवस्तुपरतन्त्रशालिन्या दर्शनक्रियायाश्चोदितपुरुषप्रयत्नतन्त्रत्वाभावेन विधानासंभवात् ।

ब्रह्महत्यां प्रमुच्येत तस्मिन्स्नात्वा महोदधौ ।

इत्यादिस्मृतिविहितब्रह्मचर्याङ्गसहितदूरतरदेशगमनसाध्यब्रह्महननिवृत्तिफलकसेतुस्नानप्रशंसार्थत्वात् । यस्य हि दर्शनमात्रेणैव दुरितोपशमः किमुत स्नानेन । अन्यथा दूरगमनानर्थक्यं प्रसजेत् । तत्र खरादीनामप्यनर्थनिवृत्तिरापतेत् । अन्धस्य न स्याच्च । ननु——

अग्निचित्कपिला राजा सती भिक्षुर्महोदधिः ।
दृष्टमात्राः पुनन्त्येते तस्मात्पश्येत नित्यशः ॥

इति क्वचिद्दर्शनक्रियाया अपि विधानं दरीदृश्यत इति चेन्मैवं वोचः । तत्राप्यनर्थवानुपपत्त्याऽग्निचिदाद्यर्वपरिचर्यादावेव तात्पर्यावधारणात् । यच्चोक्तं—विषयदोषदर्शनाद्रागो दन्दह्यत इति । तत्र विषयदोषदर्शनेन विरोधभूतानाभिरतिसंज्ञकवैराग्यैकप्रादुर्भावाद्रागनिवृत्तौ तददर्शनमात्रमिति न व्यभिचारः । यदपि तार्क्ष्यध्यानादिना विषादि सत्यं विनश्यतीति । तत्र श्लिष्यते । तत्रापि मन्त्रप्रयोगादिक्रियाया एव विषाद्यपनोदकत्वात् । ध्यानस्य प्रमात्वाभावाच्च । यदवाद्यौपाधिकस्य जीवभावस्योपाधिनिवृत्त्या निवृत्तौ ब्रह्मभावोपपत्तेर्न तदर्थमर्थवैतथ्यकथनमिति । तदपि काशकुशावलम्बनकल्पम् । विकल्पा[illegible] । किमुपाधेः सत्यत्वमभिप्रेत्य मिथ्यात्वं वा । न प्रथमः प्रमाणाभावात् । नापरः । इष्टापत्तेः । तस्मादाविद्यको भेद इति श्रुतावद्वितीयत्वोपपत्तयेऽभिधीयते न तु व्यसनितया ।

यदि वस्तुतः सर्वोपद्रवरहितमात्मतत्त्वं तर्हि कथंकारं देहादिरूपं कारागारं कारंकारं पुनः पुनस्तत्र प्रविशति । तदतिफल्गु । अविद्याया अनादित्वेन दत्तोत्तरत्वात् । अतो निवृत्त्युपाय एवान्वेषणीयः प्रेक्षावता । न तु विस्मयः कर्तव्यः । ततश्च तत्त्वमस्यादिविद्यया तदविद्यानिवृत्तौ निरतिशयानन्दात्मला-

१ क. लभ्येत । २ ख. विधिना° । ३ ख. °मनर्थकं प्र° । ४ ख. °जा भिक्षुर्महो° । ५ ख. यद्यपि । ६ ख. °ल्पानुपपत्तेः । ७ ख. श्रुतौ द्वि । ८ ख. व्यपनीतं वं वस्तु° ।

भरूपपरमपुरुषार्थः सेत्स्यति । तथा चाऽऽपस्तम्बस्मृतिः—आत्मलाभान्न परं विद्यत इति । नन्वसौ नित्यलब्धः । न हि स्वयमेव स्वस्यालब्धो भवति । सत्यम् । किंत्वनादिमायासंबन्धात्क्षीरोदकवत्समुदाचारप्रवृत्तितां न लभते । तथा च यथा शबरादिभिर्बाल्यात्स्वसुतैः सह वर्धितो राजपुत्रस्तज्जातीयमात्मानमवगच्छन्बन्धुभिर्य एवंभूतो राजा स त्वमसीति बोधिते स्वरूपे लब्धस्वरूप इव भवति तथा वेश्यास्थानीययाऽनाद्यविद्यया स्वभावान्तरं नीत आत्मा मातृस्थानीयया तत्त्वमसीत्यादिकया श्रुत्या स्वभावं नीयते । एतदाहुस्त्रैविद्यवृद्धाः—

नीचानां वसतौ तदीयतनयैः सार्धं चिरं वर्धित-
स्तज्जातीयमवैति राजतनयः स्वात्मानमप्यञ्जसा ।
संवादे महदादिभिः सह वसंस्तद्वद्भवेत्पूरुषः
स्वात्मानं सुखदुःखजालकलितं मिथ्यैव धिङ्मन्यते ॥
दाता भोगपरः समग्रविभवो यः शासिता दुष्कृतां
राजा स त्वमसीति रक्षितृमुखाच्छ्रुत्वा यथावत्स तु ।
राजीभूय जयार्थमेव यतते तद्वत्पुमान्बोधितः
श्रुत्या तत्त्वमसीत्यपास्य दुरितं ब्रह्मैव संपद्यते ।

एतेनैतत्प्रत्युक्तं यदुक्तं परैः किं द्वयोस्तादात्म्यमेकस्य वा । नाऽऽद्यः । अद्वैतभङ्गप्रसङ्गात् । न द्वितीयः । असंभवादिति । तन्न । अविद्यापरिकल्पितभेदनिवृत्तिपरत्वेन तत्त्वमस्यादितादात्म्यवादप्रामाण्योपपत्तेः । तौ च पर्यनुयोगपरिहारावग्राहिषातां मनीषिभिः ।

न द्वयोरस्ति तादात्म्यं न चैकस्याद्वयत्वतः ।
अप्रामाण्यं श्रुतेरेवं नाऽऽरोपध्वंसमात्रतः ॥ इति ।

ततश्च तत्त्वमसीति तत्त्वंपदार्थश्रवणमननभावनाबलभुवा साक्षात्कारेणानाद्यविद्यानिवृत्तौ सच्चिदानन्दैकरसब्रह्माविर्भावः संपत्स्यत इति ब्रह्मणो जिज्ञास्यत्वं प्रथमसूत्रोक्तं युक्तम् ।

अज्ञातं विषयो ब्रह्म ज्ञातं तच्च प्रयोजनम् ।
मुमुक्षुरधिकारी स्यात्संबन्धः शक्तितः श्रुतेः ॥ इति ।

---

१ ख. °म्बश्रुतिः । २ क. °या सा क्षी° । ख. °यासंहारात्क्षी° । ३ ख. लभ्यते । ४ ख. वर्तितो । ५ ख. °यते त° । ६ ख. °द्धा निचा° । ७ ख. नयोः सार्धं चि° । ८ ख. °स्तद्वत्पू° । ९ ख. °लितं मि° । १० ख. °धिता श्रु° । ११ क.—°ते । येनै° । १२ ख. °नादल° । १३ ख. °न्धः शक्तितच्छ्रुतेरिति ।

जन्माद्यस्य यतः ( ब्र० सू० १ । १ । २ ) इति द्वितीयसूत्रे ब्रह्म स्वरूपलक्षणतटस्थलक्षणाभ्यां न्यरूपि । तत्र स्वरूपान्तर्गतत्वे सति व्यावर्तकं स्वरूपलक्षणं 'सत्यं ज्ञानमनन्तं ब्रह्म' ( तै० २ । १ ) इत्यादिवेदान्तैः प्रतिपादितम् । तस्य सत्यज्ञानाद्यात्मकस्वरूपान्तर्गतत्वे सति व्यावर्तकत्वात् । तटस्थलक्षणं 'यतो वा इमानि' ( तै० ३ । १ ) इत्यादीनि वाक्यानि निरूपयन्ति जगज्जन्मादिकारणत्वेन । तदुक्तं विवरणे—

जगज्जन्मस्थितिध्वंसा यतः सिध्यन्ति कारणात् ।
तत्स्वरूपतटस्थाभ्यां लक्षणाभ्यां प्रदर्श्यते ॥ इति ।

'शास्त्रयोनित्वात्' ( ब्र० सू० १ । १ । ३ ) इति तृतीयसूत्रे प्रथमवर्णकेन षष्ठीसमासमाश्रित्य सर्वज्ञत्वं प्रत्यपादि । द्वितीयवर्णकेन बहुव्रीहिसमासमभ्युपगम्य ब्रह्मणो वेदान्तप्रमाणकत्वं प्रत्यज्ञायि ।

'तत्तु समन्वयात्' ( ब्र० सू० १ । १ । ४ ) इति चतुर्थे सूत्रे प्रथमवर्णकेन वेदान्तानां ब्रह्मणि तात्पर्यं प्रत्यपादि । द्वितीयवर्णकेन वेदान्तानां प्रतिपत्तिविधिशेषतया ब्रह्मप्रतिपादकत्वं प्रत्यक्षेपि । दिङ्मात्रमत्र प्रदर्शितम् । शिष्टं[१] शास्त्र एव स्पष्टमिति सकलं समञ्जसम् । श्रीरस्तु ।

इति श्रीमत्सायणमाधवीये सर्वदर्शनसंग्रहे सकलदर्शनशिरोलंकाररत्नं श्रीमच्छांकरदर्शनं समाप्तम् ॥

**समाप्तोऽयं सर्वदर्शनसंग्रहः ।**

---

१ ख. प्रादर्शि । शि॰ ।

॥ ॐ तत्सद्ब्रह्मणे नमः ॥

## अथ मधुसूदनसरस्वतीकृतः प्रस्थानभेदः ।

अथ सर्वेषां शास्त्राणां भगवत्येव तात्पर्यं साक्षात्परम्परया वेति समासेन तेषां प्रस्थानभेदोऽत्रोद्दिश्यते । तथाहि—ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेद इति वेदाश्चत्वारः । शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति वेदाङ्गानि षट् । पुराणन्यायमीमांसा धर्मशास्त्राणि चेति चत्वार्युपाङ्गानि । अत्रो-पपुराणानामपि पुराणे[1]ऽन्तर्भावः । वैशेषिकशास्त्रस्य न्याये । वेदान्तशास्त्रस्य मीमांसायाम् । महाभारतरामायणयोः सांख्यपातञ्जलपाशुपतवैष्णवादीनां च धर्मशास्त्रे । मिलित्वा चतुर्दश विद्याः । तथा चोक्तं याज्ञवल्क्येन (१. ३.)—

पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।

वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥ इति ।

एता एव चतुर्भिरुपवेदैः सहिता अष्टादश विद्या भवन्ति । आयुर्वेदो धनुर्वेदो गान्धर्ववेदोऽर्थशास्त्रं चेति चत्वार उपवेदाः । सर्वेषां चाऽऽस्तिकानामेतावन्त्येव शास्त्रप्रस्थानानि । अन्येषामप्येकदेशिनामेतेष्वेवान्तर्भावात् ।

ननु नास्तिकानामपि प्रस्थानान्तराणि सन्ति तान्येतेष्वनन्तर्भावात्पृथग्गण-यितुमुचितानि । तथाहि—शून्यवादेनैकं प्रस्थानं माध्यमिकानाम् । क्षणिकवि-ज्ञानमात्रवादेनान्यद्योगाचाराणाम् । ज्ञानाकारानुमेयक्षणिकबाह्यार्थवादेनापरं सौ त्रान्तिकानाम् । प्रत्यक्ष[2]सल्लक्षणक्षणिकबाह्यार्थवादेनापरं वैभाषिकाणाम् । एवं सौगतानां प्रस्थानचतुष्टयम् । तथा देहात्मवादेनैकं प्रस्थानं चार्वाकाणाम् । एवं देहा[3]तिरिक्तदेहपरि[4]माणात्मवादेन द्वितीयं प्रस्थानं दिगम्बराणाम् । एवं मिलित्वा नास्तिकानां षट् प्रस्थानानि तानि कस्मान्नोच्यन्ते । सत्यम् । वेदबाह्यत्वात्तेषां म्लेच्छादिप्रस्थानवत्परम्परयाऽपि पुरुषार्थानुपयोगित्वादुपेक्षणीय[5]त्वमेव । इह तु साक्षाद्वा परम्परया वा पुमर्थोपयोगिनां वेदो[6]पकरणानामेव प्रस्थानानां भेदो दर्शितः । ततो न न्यूनत्वशङ्कावकाशः । अथ संक्षेपेणैषां प्रस्थानानां स्वरूप-भेदहे[7]तुप्र[8]योजनभेद उच्यते बालानां व्युत्पत्तये ।

तत्र धर्मब्रह्मप्रतिपादकमपौरुषेयं प्रमाणवाक्यं वेदः । स च मन्त्रब्राह्मणा-त्मकः । तत्र मन्त्रा अनुष्ठानकारकभूतद्रव्यदेवताप्रकाशकाः । तेऽपि त्रिविधाः ।

---

१ ख. °णेष्वन्त° । २ ख. °क्षस्वल । ३ ग. °हाद्यति° । ४ ख. °रिणामात्म° । ५ क.–°यमे° । ६ ग. °पकार° । ७ ग. °भेदे हे° । ८ ख. °हेतुः प्र° ।

ऋग्यजुःसामभेदात् । तत्र पादबद्धगायत्र्यादिच्छन्दोविशिष्टा ऋचः ' अग्निमीळे पुरोहितम् ' इत्याद्याः । ता एव गीतिविशिष्टाः सामानि । तदुभयविलक्षणानि यजूंषि । अग्नीदग्नीन्विहरेत्यादिसंबोधनरूपा निगदमन्त्रा अपि यजुरन्तर्भूता एव । तदेवं निरूपिता मन्त्राः ।

ब्राह्मणमपि त्रिविधम् । विधिरूपमर्थवादरूपं तदुभयविलक्षणरूपं च । तत्र शब्दभावनाविधिरिति भट्टाः[1] । नियोगो विधिरिति[2] प्राभाकराः । इष्टसाधनता विधिरिति तार्किकादयः सर्वे । विधिरपि चतुर्विधः । उत्पत्त्यधिकारविनियोगप्र-[3] योगभेदात् । तत्र कर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिराग्नेयोऽष्टाकपालो भवतीत्यादिः । सेतिकर्तव्यताकस्य करणस्य यागादेः फलसंबन्धबोधको विधि-रधिकारविधिर्दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यादिः । अङ्गसंबन्धबोधको विधि-र्विनियोगविधिर्व्रीहिभिर्यजेत समिधो यजतीत्यादिः । साङ्गप्रधानकर्मप्रयोगै-क्यबोधकः पूर्वोक्तविधित्रयमेलनरूपः प्रयोगविधिः । स च श्रौत इत्येके । कल्प्य इत्यपरे । कर्मस्वरूपं च द्विविधम् । गुणकर्मार्थकर्म च । तत्र क्रतुकर्म-कारकाण्याश्रित्य विहितं गुणकर्म । तदपि चतुर्विधम् । उत्पत्त्याप्तिविकृतिसं-[4] स्कृतिभेदात् । तत्र वसन्ते ब्राह्मणोऽग्नीनादधीत यूपं तक्षतीत्यादावाधानतक्षणा-दिना संस्कारविशेषविशिष्टाग्नियूपादेरुत्पत्तिः । स्वाध्यायोऽध्येतव्यो गां पयो दोग्धीत्यादावध्ययनदोहनादिना विद्यमानस्यैव स्वाध्यायपयःप्रभृतेः प्राप्तिः । सोममभिषुणोति व्रीहीनवहन्त्याज्यं विलापयतीत्यादावभिषवावघातविलापनैः सोमा-दीनां विकारः । व्रीहीन्प्रोक्षति पत्न्यवेक्षत इत्यादौ प्रोक्षणावेक्षणा-दिभिर्व्रीह्यादिद्रव्याणां संस्कारः । एतच्चतुष्टयं चाङ्गमेव । तथा क्रतुकारकाण्या-श्रित्य विहितमर्थकर्म[5] च द्विविधम् । अङ्गं प्रधानं च । अन्यार्थमङ्गम् । अन-न्यार्थं प्रधानम् । अङ्गमपि द्विविधम् । संनिपत्योपकारकमारादुपकारकं[6] च । तत्र प्रधानस्वरूपनिर्वाहकं प्रथमम् । फलोपकारि[7] द्वितीयम् । एवं संपूर्णाङ्ग-सहितो विधिः प्रकृतिः । विकलाङ्गसंयुक्तो[8] विधिर्विकृतिः । तदुभयविलक्षणो विधिर्दार्विहोमः । एवमन्यदप्यूह्यम् । तदेवं निरूपितो विधिभागः[9] । प्राशस्त्य-निन्दान्यतरलक्षणयां[10] विधिविशेषभूतं[11] वाक्यमर्थवादः । स च त्रिविधः । गुण-वादोऽनुवादो भूतार्थवादश्चेति । तत्र प्रमाणान्तरविरुद्धार्थबोधको गुणवाद

---

१ ग. भाट्टाः । २ ग. °ति प्रभा । ३ ख. प्रस्थानप्र° । ४ ख. उत्पाद्याऽऽप्य° । ५ ख. °र्म तद्द्विवि° । ६ ख. °कभेदमा° । ७ ख. °कारकं द्वि° । ८ ख. °ङ्गसंयुक्तो वि° । ९ ख. °धिविभा° । १० ग. °याया °वि । ११ ख. ग. °धिशेष° ।

आदित्यो यूप इत्यादिः । प्रमाणान्तरप्राप्त्यर्थबोधकोऽनुवादोऽग्निर्हिमस्य भेषजमित्यादिः । प्रमाणान्तरविरोधतत्प्राप्तिरहितार्थबोधको भूतार्थवाद इन्द्रो[1] वृत्राय वज्रमुद्यच्छदित्यादिः । तदुक्तम्—

विरोधे गुणवादः स्यादनुवादोऽवधारिते ।
भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः ॥ इति ।

तत्र त्रिविधानामप्यर्थवादानां विधिस्तुतिपरत्वे समानेऽपि भूतार्थवादानां[2] स्वार्थेऽपि प्रामाण्यं देवताधिकरणन्यायात् । अबाधिताज्ञातज्ञापकत्वं हि प्रामाण्यम् । तच्चा[3]बाधितविषयत्वाज्ज्ञातज्ञापकत्वाच्च न गुणवादानुवादयोः । भूतार्थस्य[4] तु स्वार्थे तात्पर्यरहितस्याप्यौत्सर्गिकं प्रामाण्यं विहन्यते । तदेवं निरूपितोऽर्थवादभागः । विध्यर्थवादोभयविलक्षणं तु वेदान्तवाक्यम् । तच्चाज्ञातज्ञापकत्वेऽप्यनुष्ठानाप्रतिपादकत्वान्न विधिः । स्वतः पुरुषार्थपरमानन्दज्ञानात्मकब्रह्मणि स्वार्थे उपक्रमोपसंहारादिषड्विधतात्पर्यलिङ्गवत्तया स्वतः प्रमाणभूतं सर्वानपि विधीनन्तःकरणशुद्धिद्वारा स्वविशेषतामापादयदन्यशेषत्वाभावाच्च[5] । तस्मादुभयविलक्षणमेव वेदान्तवाक्यम् । तच्च क्वचिदज्ञातज्ञापकत्वमात्रेण विधिरिति व्यपदिश्यते । क्वचिद्विधिपदरहितप्रमाणवाक्यत्वेन भूतार्थवाद इति व्यवह्रियत इति न दोषः। तदेवं निरूपितं त्रिविधं ब्राह्मणम् ।

एवं च कर्मकाण्डब्रह्मकाण्डात्मको वेदो धर्मार्थकाममोक्षहेतुः । स च प्रयोगत्रयेण यज्ञनिर्वाहार्थमृग्यजुःसामभेदेन भिन्नः[7] । तत्र हौत्रप्रयोग ऋग्वेदेन, आध्वर्यवप्रयोगो यजुर्वेदेन, औद्गात्रप्रयोगः सामवेदेन । ब्राह्मयाजमानप्रयोगौ त्वत्रैवान्तर्भूतौ । अथर्ववेदस्तु यज्ञानुपयुक्तः शान्तिकपौष्टिकाभिचारादिकर्मप्रतिपादकत्वेनात्यन्तविलक्षण एव । एवं प्रवचनभेदात्प्रतिवेदं भिन्ना भूयस्यः शाखाः[8] । एवं च कर्मकाण्डे व्यापारभेदेऽपि सर्वासां वेदशाखानामेकरूपत्वमेव[9] ब्रह्मकाण्डे ।

इति चतुर्णां वेदानां प्रयोजनभेदेन भेद उक्तः । अथाङ्गानामुच्यते[10] । तत्र शिक्षाया उदात्तानुदात्तस्वरितह्रस्वदीर्घप्लुतादिविशिष्टस्वरव्यञ्जनात्मकवर्णोच्चारविशेषज्ञानं प्रयोजनम् । तदभावे मन्त्राणामनर्थकत्वात् । तथा चोक्तम्—

मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्(शि० ५२) इति ।

---

१ ग. °न्द्रो वज्रहस्तः पुरंदरः । त° । २ ख. °नां स्तु° । ३ क. तच्च बा° । ४ ख. °र्थवादस्य । ५ ख स्वशे° । ६ ख. °च्च नार्थवादः । त° । ७ ख. °मवेदैर्भिन्नः । ८ ख. ग गाथाः । ९ ख. °पमेव ब्रह्मकाण्डमिति । १० ख. ङ्गानां प्रयोजनम्° ।

तत्र सर्ववेदसाधारणी शिक्षा । अथ शिक्षां प्रवक्ष्यामीत्यादिपञ्चखण्डात्मिका पाणिनिना प्रकाशिता । प्रतिवेदशाखं च भिन्नरूपा प्रातिशाख्यसंज्ञिताऽन्यैरेव मुनिभिः प्रदर्शिता । एवं वैदिकपदसाधुत्वज्ञानेनोहादिकं व्याकरणस्य प्रयोजनम् । तच्च वृद्धिरादैजित्याद्यध्यायाष्टकात्मकं महेश्वरप्रसादेन भगवता पाणिनिनैव विरचितम् । पाणिनीयसूत्रेषु कात्यायनेन मुनिना वार्तिकं विरचितम् । तद्वार्तिकस्योपरि च भगवता पतञ्जलिना महाभाष्यमारचि । तदेतत्त्रिमुनि व्याकरणं वेदाङ्गं माहेश्वरमित्याख्यायते । कौमारादिव्याकरणानि तु न वेदाङ्गानि किंतु लौकिकप्रयोगमात्रज्ञानार्थानीत्यवगन्तव्यम् ।

एवं शिक्षाव्याकरणाभ्यां वर्णोच्चारणपदसाधुत्वे ज्ञाते वैदिकमन्त्रपदानामर्थज्ञानाकाङ्क्षायां तदर्थं भगवता यास्केन समाम्नायः समाम्नातः, स व्याख्यातव्य इत्यादित्रयोदशाध्यायात्मकं निरुक्तमारचितम् । तत्र च नामाख्यातनिपातोपसर्गभेदेन चतुर्विधं पदजातं निरूप्य वैदिकमन्त्रपदार्थानामर्थः प्रकाशितः । मन्त्राणां चानुष्ठेयार्थप्रकाशनद्वारेणैव करणत्वात्पदार्थज्ञानाधीनत्वाच्च वाक्यार्थज्ञानस्य मन्त्रस्थपदार्थज्ञानाय निरुक्तमवश्यमपेक्षितम् । अन्यथाऽनुष्ठानासंभवात् । सृण्येव जर्भरी तुर्फरी तू इत्यादिदुरूहाणां शब्दानां ( निरु० १३-५) प्रकारान्तरेणार्थज्ञानस्यासंभवनीयत्वाच्च । एवं निघण्टवोऽपि वैदिकद्रव्यदेवतात्मकपदार्थपर्यायशब्दात्मका निरुक्तान्तर्भूता एव । तत्रापि निघण्टुसंज्ञकः पञ्चाध्यायात्मको ग्रन्थो भगवता यास्केनैव कृतः ।

एवमृङ्मन्त्राणां पादबद्धच्छन्दोविशेषविशिष्टत्वात्तदज्ञाने च निन्दाश्रवणाच्छन्दोविशेषनिमित्तानुष्ठानविशेषविधानाच्च । छन्दोज्ञानाकाङ्क्षायां तत्प्रकाशनाय धीः श्रीः स्त्रीमित्याद्यष्टाध्यायात्मिका छन्दोविवृतिर्भगवता पिङ्गलेन विरचिता । तत्राप्यलौकिकमित्यन्तेनाध्यायत्रयेण गायत्र्युष्णिगनुष्टुब्बृहती पङ्क्तिस्त्रिष्टुब्जगतीति सप्त च्छन्दांसि सावान्तरभेदानि निरूपितानि । अथ लौकिकमित्यारभ्याध्यायपञ्चकेन पुराणेतिहासादावुपयोगीनि लौकिकानि च्छन्दांसि प्रसङ्गान्निरूपितानि व्याकरणे लौकिकपदनिरूपणवत् ।

एवं वैदिककर्माङ्गदर्शादिकालज्ञानाय ज्योतिषं भगवताऽऽदित्येन गर्गादिभिश्च प्रणीतं बहुविधमेव ।

शाखान्तरीयगुणोपसंहारेण वैदिकानुष्ठानक्रमविशेषज्ञानाय कल्पसूत्राणि । तानि च प्रयोगत्रयभेदात्त्रिविधानि । तत्र हौत्रप्रयोगप्रतिपादकान्याश्वलायनं-

---

१ ख. °हापोहादि° । २ ख. °सादादेव भ° । ३ ख. °धुत्वज्ञाने वै° । ४ ख. इत्यष्टाद° । ५ ख. °ज्ञानस्य । ६ ग. °घण्टुरपि । ७ ख. °णां पद° । ८ ख. °येणेति । ९ ख. °व । एवं ज्ञा° । १० ख. °न सांख्यय° । ग. °मसांख्याय° । घ. °नशांख्याय° ।

शाङ्खायनादिप्रणीतानि । आध्वर्यवप्रयोगप्रतिपादकानि बौधायनापस्तम्बकात्यायनादिप्रणीतानि । औद्गात्रप्रयोगप्रतिपादकानि लाट्यायनद्राह्यायणादिप्रणीतानि ।

एवं निरूपितः षण्णामङ्गानां प्रयोजनभेदः । चतुर्णामुपाङ्गानामधुनोच्यते । तत्र सर्गप्रतिसर्गवंशमन्वन्तरवंशानुचरितप्रतिपादकानि भगवता बादरायणेन कृतानि पुराणानि । तानि च ब्राह्मं पाद्मं वैष्णवं शैवं भागवतं नारदीयं मार्कण्डेयमाग्नेयं भविष्यं ब्रह्मवैवर्तं लैङ्गं वाराहं स्कान्दं वामनं कौर्मं मात्स्यं गारुडं ब्रह्माण्डं चेत्यष्टादश ।

आद्यं सनत्कुमारेण प्रोक्तं वेदविदां वराः ।<br>
द्वितीयं नारसिंहाख्यं तृतीयं नान्दमेव च ॥<br>
चतुर्थं शिवधर्माख्यं दौर्वासं पञ्चमं विदुः ।<br>
षष्ठं तु नारदीयाख्यं कापिलं सप्तमं विदुः ॥<br>
अष्टमं मानवं प्रोक्तं ततश्चोशनसेरितम् ।<br>
ततो ब्रह्माण्डसंज्ञं तु वारुणाख्यं ततः परम् ॥<br>
ततः कालीपुराणाख्यं वासिष्ठं मुनिपुंगवाः ।<br>
ततो वासिष्ठं लैङ्गाख्यं प्रोक्तं माहेश्वरं परम् ॥<br>
ततः साम्बपुराणाख्यं ततः सौरं महाद्भुतम् ।<br>
पाराशरं ततः प्रोक्तं मारीचाख्यं ततः परम् ॥<br>
भार्गवाख्यं ततः प्रोक्तं सर्वधर्मार्थसाधकम् ।

एवमुपपुराणान्यनेकप्रकाराणि द्रष्टव्यानि ।

न्याय आन्वीक्षिकी पञ्चाध्यायी गौतमेन प्रणीता । प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानाख्यानां षोडशपदार्थानामुद्देशलक्षणपरीक्षाभिस्तत्त्वज्ञानं तस्याः प्रयोजनम् । एवं दशाध्यायं वैशेषिकं शास्त्रं कणादेन प्रणीतम् । द्रव्यगुणकर्मसामान्यविशेषसमवायानां षण्णां पदार्थानामभावसप्तमानां साधर्म्यवैधर्म्याभ्यां व्युत्पादनं तस्य प्रयोजनम् । एतदपि न्यायपदेनोक्तम् ।

एवं मीमांसाऽपि द्विविधा । कर्ममीमांसा शारीरकमीमांसा च । तत्र द्वाद-

---

१ क. °द्राह्व्याय° । २ ग. °यं नन्दिमे° । ३ ख. °द्भुतम् । ४ क. वाशिष्ठं । ५ क. घ. वाशिष्ठं । ६ ख. वाशिष्ठलैङ्गाख्यं । ७ ग. पराशरं । ८ ख. °क्तं ततो भागवतं परम् । पु° । ९ ख. निर्मितम् ।

शाध्यायी कर्ममीमांसा 'अथातो धर्मजिज्ञासा' इत्यादि 'अन्वाहार्ये च (१६) दर्शनात्' इत्यन्ता भगवता जैमिनिना प्रणीता। तत्र धर्मप्रमाणम्। धर्मभेदाभेदौ। शेषशेषिभावः। क्रत्वर्थपुरुषार्थभेदेन प्रयुक्तिविशेषः। श्रुत्यर्थपठनादिभिः क्रमभेदः। अधिकारविशेषः। सामान्यातिदेशः। विशेषातिदेशः। ऊहः। बाधः। तन्त्रम्। प्रसङ्गश्चेति क्रमेण द्वादशाध्यायानामर्थाः। तथा संकर्षणकाण्डमप्यध्यायचतुष्टयात्मकं जैमिनिप्रणीतम्। तच्च देवताकाण्डसंज्ञया प्रसिद्धमप्युपासनाख्यकर्मप्रतिपादकत्वात्कर्ममीमांसान्तर्गतमेव। तथा चतुरध्यायी शारीरकमीमांसा 'अथातो ब्रह्मजिज्ञासा' इत्यादिरनावृत्तिः शब्दादित्यन्ता जीवब्रह्मैकत्वसाक्षात्कारहेतुः श्रवणाख्यविचारप्रतिपादकान्न्यायान्प्रदर्शयन्ती भगवता बादरायणेन कृता। तत्र सर्वेषामपि वेदान्तवाक्यानां साक्षात्परम्परया वा प्रत्यगभिन्नाद्वितीये ब्रह्मणि तात्पर्यमिति समन्वयः प्रथमाध्याये प्रदर्शितः। तत्र च प्रथमे पादे स्पष्टब्रह्मलिङ्गयुक्तानि वाक्यानि विचारितानि। द्वितीये त्वस्पष्टलिङ्गान्युपास्यब्रह्मविषयाणि। तृतीये पादेऽस्पष्टब्रह्मलिङ्गानि प्रायशो ज्ञेयब्रह्मविषयाणि। एवं पादत्रयेण वाक्यविचारः समापितः। चतुर्थपादे तु प्रधानविषयत्वेन संदिह्यमानान्यव्यक्ताजादिपदानि चिन्तितानि। एवं वेदान्तानामद्वये ब्रह्मणि समन्वये सिद्धे तत्र संभावितस्मृतितर्कादिप्रयुक्तैस्तर्कैर्विरोधमाशङ्क्य तत्परिहारः क्रियत इत्यविरोधो द्वितीयाध्यायेन वर्णितः। तत्राऽऽद्यपादे सांख्ययोगकाणादादिस्मृतिभिः सांख्यादिप्रयुक्तैस्तर्कैश्च विरोधो वेदान्तसमन्वयस्य परिहृतः। द्वितीये पादे सांख्यादिमतानां दुष्टत्वं प्रतिपादितम्। स्वपक्षस्थापनपरपक्षनिवारणरूपपक्षद्वयात्मकत्वाद्विचारस्य। तृतीये पादे महाभूतसृष्ट्यादिश्रुतीनां परस्परविरोधः पूर्वभागेण परिहृतः। उत्तरभागेण तु जीवविषयाणाम्। चतुर्थपादे त्विन्द्रियविषयश्रुतीनां विरोधः परिहृतः। तृतीयेऽध्याये साधननिरूपणम्। तत्र प्रथमे पादे जीवस्य परलोकगमनागमननिरूपणेन वैराग्यं निरूपितम्। द्वितीये पादे पूर्वभागेण त्वंपदार्थः शोधितः। उत्तरभागेण तत्पदार्थः। तृतीये पादे निर्गुणे ब्रह्मणि नानाशाखापठितपुनरुक्तपदोपसंहारः कृतः। प्रसङ्गाच्च सगुणनिर्गुणविद्यासु शाखान्तरीयगुणोपसंहारानुपसंहारौ निरूपितौ। चतुर्थे पादे निर्गुणब्रह्मविद्याया बहिरङ्गसाधनान्याश्रमयज्ञादीन्यन्तरङ्गसाधनानि शमदमनिदिध्यासनादीनि च निरूपितानि। चतुर्थेऽध्याये सगुणनिर्गुणविद्ययोः फलविशेषनिर्णयः कृतः। तत्र प्रथमे पादे

१ ग. °हार्ये च°। २ ख. °दिना°। ३ ख. °लिङ्गायु°। ४ ख. °ष्टब्रह्मलि°। ५ ख. °ण वि°। ६ ग. °ह्य सामान्य°। ७ ख. °कैश्च विरोधो। ८ ग. °त्मकत्वाद्वि°। ९ ख. °रोधपरिहारः। तृ°। १० ग. °हारौ।

श्रवणाद्यावृत्त्या निर्गुणं ब्रह्म साक्षात्कृत्य जीवतः पापपुण्यालेपलक्षणा जीवन्मुक्तिरभिहिता । द्वितीये पादे म्रियमाणस्योत्क्रान्तिप्रकारश्चिन्तितः । तृतीये पादे सगुणब्रह्मविदो मृतस्योत्तरमार्गोऽभिहितः । चतुर्थे पादे पूर्वभागेण निर्गुणब्रह्मविदो विदेहकैवल्यप्राप्तिरुक्ता । उत्तरभागेण सगुणब्रह्मविदो ब्रह्मलोकस्थितिरुक्तेति । इदमेव सर्वशास्त्राणां मूर्धन्यम् । शास्त्रान्तरं सर्वमस्यैव शेषभूतमितीदमेव मुमुक्षुभिरादरणीयं श्रीशंकरभगवत्पादोदितप्रकारेणेति रहस्यम् ।

एवं धर्मशास्त्राणि मनुयाज्ञवल्क्यविष्णुयमाङ्गिरोवसिष्ठदक्षसंवर्तशातातपपराशरगौतमशङ्खलिखितहारीतापस्तम्बोशनोव्यासकात्यायनबृहस्पतिदेवलनारदपैठीनसिप्रभृतिभिः कृतानि वर्णाश्रमधर्मविशेषाणां विभागेन प्रतिपादकानि । एवं व्यासकृतं महाभारतं वाल्मीकिकृतं रामायणं च धर्मशास्त्रं एवान्तर्भूतं स्वयमितिहासत्वेन प्रसिद्धम् । सांख्यादीनां धर्मशास्त्रान्तर्भावेऽपीह स्वशब्देनैव निर्देशात्पृथगेव संगतिर्वाच्या ।

अथ वेदचतुष्टयस्य क्रमेण चत्वार उपवेदाः । तत्राऽऽयुर्वेदस्याष्टौ स्थानानि भवन्ति । सूत्रं[4] शारीरमैन्द्रियं चिकित्सा निदानं विमानं विकल्पः सिद्धिश्चेति । ब्रह्मप्रजापत्यश्विधन्वन्तरीन्द्रभरद्वाजात्रेयाग्निवेशादिभिरूपदिष्टश्चरकेण संक्षिप्तः । तत्रैव सुश्रुतेन पञ्चस्थानात्मकं प्रस्थानान्तरं कृतम् । एवं वाग्भटादिनाऽपि बहुधेति न शास्त्रभेदः । कामशास्त्रमप्यायुर्वेदान्तर्गतमेव । तत्रैव सुश्रुतेन वाजीकरणाख्यकामशास्त्राभिधानात् । तत्र वात्स्यायनेन पञ्चाध्यायात्मकं कामशास्त्रं प्रणीतम् । तस्य च विषयवैराग्यमेव प्रयोजनम् । शास्त्रोद्दीपितमार्गेणापि विषयभोगे दुःखमात्रपर्यवसानात् । चिकित्साशास्त्रस्य रोगतत्साधनरोगनिवृत्तितत्साधनज्ञानं प्रयोजनम् ।

एवं धनुर्वेदः पादचतुष्टयात्मको विश्वामित्रप्रणीतः । तत्र प्रथमो दीक्षापादः । द्वितीयः संग्रहपादः । तृतीयः सिद्धिपादः । चतुर्थः प्रयोगपादः । तत्र प्रथमे पादे धनुर्लक्षणमधिकारिनिरूपणं च कृतम् । अत्र धनुःशब्दश्चापे रूढोऽपि धनुर्विधायुधे प्रवर्तते । तच्चतुर्विधम्—मुक्तममुक्तं मुक्तामुक्तं यन्त्रमुक्तम् । मुक्तं चक्रादि । अमुक्तं खड्गादि । मुक्तामुक्तं शल्यावान्तरभेदादि । यन्त्रमुक्तं शरादि । तत्र मुक्तमस्त्रमुच्यते । अमुक्तं शस्त्रमित्युच्यते । तदपि ब्राह्मवैष्णवपाशुपतप्राजापत्याग्नेयादिभेदादनेकविधम् । एवं साधिदैवतेषु समन्त्रकेषु चतुर्विधायुधेषु येषामधिकारः क्षत्रियकुमाराणां तदनुयायिनां च ते सर्वे चतुर्विधाः पदाति-

१ ख. 'रं चक स° । २ ख. °क्षुणाऽऽद° । ३ ख. 'स्त्रनध्य ए° । ४ ख. °त्रं शरी° । ५ ख. °श्वप्रस्था° । ६ ख. °हुविंशपीति । ७ ख. °नानि° । ८ ख. °धनं ज्ञानप्र° । ९ ख. °पि चतुर्वि° । १० ख. 'मुक्तं च मु° । ११ ग. शक्त्यावा° ।

रथगजतुरगारूढाः । दीक्षाभिषेकशकुनमङ्गलकरणादिकं च सर्वमपि प्रथमे पादे निरूपितम् । सर्वेषां शस्त्रविशेषाणामाचार्यस्य च लक्षणपूर्वकं संग्रहणप्रकारो दर्शितो द्वितीयपादे । गुरुसंप्रदायसिद्धानां शस्त्रविशेषाणां पुनः पुनरभ्यासो मन्त्रदेवतासिद्धिकरणमपि निरूपितं तृतीयपादे । एवं देवतार्चनाभ्यासादिभिः सिद्धानामस्त्रविशेषाणां प्रयोगश्चतुर्थपादे निरूपितः । क्षत्रियाणां स्वधर्माचरणं[3] युद्धम् । दुष्टस्य दण्डश्चोरादिभ्यः प्रजापालनं च धनुर्वेदस्य प्रयोजनम् । एवं च ब्रह्मप्रजापत्यादिक्रमेण विश्वामित्रप्रणीतं धनुर्वेदशास्त्रम् ।

एवं गान्धर्ववेदो भगवता भरतेन प्रणीतः स गीतवाद्यनृत्यभेदेन बहुविधः । देवताराधनं निर्विकल्पकसमाध्यादिसिद्धिश्च गान्धर्ववेदस्य प्रयोजनम् ।

एवमर्थशास्त्रमपि बहुविधम् । नीतिशास्त्रमश्वशास्त्रं शिल्पशास्त्रं सूपशास्त्रं चतुःषष्टिकलाशास्त्रं चेति । तत्सर्वं नानामुनिभिः प्रणीतम् । अस्य च सर्वस्य लौकिकवत्प्रयोजनभेदो द्रष्टव्यः ।

एवमष्टादश विद्यास्त्रयीशब्देनोक्ताः । अन्यथा न्यूनताप्रसङ्गात् । तथा सांख्यशास्त्रं भगवता कपिलेन प्रणीतम् । तच्च 'अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः ' इत्यादि षडध्यायम् । तत्र प्रथमेऽध्याये विषया निरूपिताः । द्वितीयेऽध्याये प्रधानकार्याणि । तृतीयेऽध्याये विषयेभ्यो वैराग्यम् । चतुर्थेऽध्याये विरक्तानां पिङ्गलाकुरवादीनामाख्यायिकाः । पञ्चमेऽध्याये परपक्षनिर्णयः । षष्ठेऽध्याये सर्वार्थसंक्षेपः । प्रकृतिपुरुषविवेकज्ञानं सांख्यशास्त्रस्य प्रयोजनम् ।

तथा योगशास्त्रं भगवता पतञ्जलिना प्रणीतम् । अथ योगानुशासनमित्यादि पादचतुष्टयात्मकम् । तत्र प्रथमे पादे चित्तवृत्तिनिरोधात्मकः समाधिरभ्यासवैराग्यरूपं च तत्साधनं निरूपितम् । द्वितीये पादे विक्षिप्तचित्तस्यापि समाधिसिद्ध्यर्थं यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधय इत्यष्टाङ्गानि निरूपितानि । तृतीये पादे योगविभूतयः । चतुर्थे पादे कैवल्यमिति । तस्य च विजातीयप्रत्ययनिरोधद्वारेण निदिध्यासनसिद्धिः प्रयोजनम् ।

तथा पशुपतिमतं पाशुपतं शास्त्रं[10] पशुपतिना पशुपाशविमोक्षणाय ' अथातः पाशुपतं योगविधिं व्याख्यास्यामः' इत्यादि पञ्चाध्यायं विरचितम् । तत्राध्यायपञ्चकेनापि[11] कार्यरूपो जीवः[12] । पशुः कारणं पतिरीश्वरः । योगः[13] पशुपतौ चित्तसमाधानम् । विधिर्भस्मना त्रिषवणस्नानादिश्च निरूपितः । दुःखान्तसंज्ञो

---

१ ख. निरूपणम् । २ ख. °नां शास्त्र° । ग. °नां पु° । ३ ग. °णं दु° । ४ ख. ग. °ष्टदस्युचोरा° । ५ ख. °वं गन्ध° । ६ ख. °यीविद्याश° । ७ ख. ग. °ररादी° । ८ ख. °त्तनिवृ° । ९ ख. योगविकृत° । १० ख. °स्त्रं भगवता प° । ११ ख. °केन का° । १२ ख. °वः का° । १३ ख. योगप° । १४ ग. °न्तरसं° ।

मोक्षश्च प्रयोजनम् । एत एव कार्यकारणयोगविधिदुःखान्ता इत्याख्यायन्ते ।

एवं वैष्णवं नारदादिभिः कृतं पञ्चरात्रम्[1] । तत्र वासुदेवसंकर्षणप्रद्युम्नानिरुद्धाश्चत्वारः पदार्था निरूपिताः । भगवान्वासुदेवः सर्वकारणं परमेश्वरः । तस्मादुत्पद्यते संकर्षणाख्यो जीवः । तस्मान्मनः प्रद्युम्नः । तस्मादनिरुद्धोऽहंकारः । सर्वे चैते भगवतो वासुदेवस्यैवांशभूताः । तद्भिन्ना एवेति भगवतो वासुदेवस्य मनोवाक्कायवृत्तिभिराराधनं कृत्वा कृतकृत्यो भवतीत्यादि च निरूपितम् ।

तदेवं दर्शितः प्रस्थानभेदः । सर्वेषां च संक्षेपेण त्रिविध एव प्रस्थानभेदः । तत्राऽऽरम्भवाद एकः । परिणामवादो द्वितीयः । विवर्तवादस्तृतीयः । पार्थिवाप्यतैजसवायवीयाश्चतुर्विधाः परमाणवो द्व्यणुकादिक्रमेण ब्रह्माण्डपर्यन्तं जगदारभन्ते । असदेव कार्यं कारकव्यापारादुत्पद्यत इति प्रथमस्तार्किकाणां, मीमांसकानां च सत्त्वरजस्तमोगुणात्मकं प्रधानमेव महदहंकारादिक्रमेण जगदाकारेण परिणमते । पूर्वमपि सूक्ष्मरूपेण सदेव कार्यं कारणव्यापारेणाभिव्यज्यत इति द्वितीयः पक्षः सांख्ययोगपातञ्जलपाशुपतानाम्[2] । ब्रह्मणः परिणामो जगदिति वैष्णवानाम्[3] । स्वप्रकाशपरमानन्दाद्वितीयं ब्रह्म स्वमायावशान्मिथ्यैव जगदाकारेण कल्पत इति तृतीयः पक्षो ब्रह्मवादिनाम् । सर्वेषां प्रस्थानकर्तॄणां मुनीनां विवर्तवादपर्यवसानेनाद्वितीये परमेश्वर एव प्रतिपाद्ये तात्पर्यम् । न हि ते मुनयो भ्रान्ताः सर्वज्ञत्वात्तेषाम् । किंतु बहिर्विषयप्रवणानामापाततः पुरुषार्थे प्रवेशो न संभवतीति नास्तिक्यवारणाय तैः प्रकारभेदाः प्रदर्शिताः । तत्र तेषां तात्पर्यमबुद्ध्वा वेदविरुद्धेऽप्यर्थे[4] तात्पर्यमुत्प्रेक्षमाणास्तन्मतमेवोपादेयत्वेन गृह्णन्तो जना नानापथजुषो भवन्तीति सर्वमनवद्यम् ।

इति श्रीमधुसूदनसरस्वतीविरचितः प्रस्थानभेदः ॥

---

१ ख. पाञ्चरात्रम् । २ ग. णामी ज° । ३ ख. °म् । मायावच्छिन्नब्रह्मपरिणामो जगदिति शाक्तानां स्व° । ४ ख. र्थे तेषां ता° ।

## अथ सर्वदर्शनसंग्रहान्तर्गतश्लोकश्रुतिसूत्रभाष्याद्यवाक्यग्रन्थनामग्रन्थकारनामानुक्रमणिका ।

## भाष्याणि.

इति सर्वदर्शनसंग्रहान्तर्गतश्लोकश्रुतिसूत्रभाष्याद्यवाक्य-
ग्रन्थनामग्रन्थकारनामानुक्रमणिका ।

---